अथ नवमी।

मेध्यातिथिऋषिः*।

३ १र २र ३ १ २ ३ १ २
युङ्क्ष्वा*हि वृत्रहन्तम हरी इन्द्र परावतः।

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरागहि॥ ९॥ ६९

२ ५ १ ४र २र ४ ५ २र ४५ १ २ ५
दाशू२३४षाइ। उपोपेन्नुमघवन्भूयइत्। हारइनू२३४ताइ।

२ ३ ५ २ १ ५ ४ ५
दानन्दा२३४इवा। स्यपो२३४वा। च्याऽपृतो६हाइ॥२१॥६८

किन्तु, "दाशुषे" हविर्दात्रे यजमानाय "सश्चसि"(१) सङ्गच्छसे अस्मान्। हे "मघवन्" धनवन्निन्द्र! "देवस्य" द्योतनादि-गुणकस्य तव भूयः प्रभूतं दानं "उपोपेत् पृच्यते" (अपर उपशब्दः पूरणः) उपपृच्यत(२) एव अस्माभिः संपृच्यत इत्यर्थः॥ ८॥ ६८

---

* 'मेधातिथिरिन्द्रमाह'-इति वि०।

* "युक्ष्वा"-इत्यननुनासिकः पाठो बह्वृचाम्।

---

६९ ऋग्वेदस्य ५,७,२८,२।

(१)—'सश्चति गतिकर्मसु पठितः, तथापि दाशुष इति सम्प्रदानम् तेर्दानार्थाद् दृश्यः'-इति वि०।

(२)—'उपपृच्यते, उपेत्य भवति, यावत् पूर्वदानं नैव क्षीयते तावदेव ददासीत्यर्थः'-इति वि०।

I आइहीर। आइहिहाइ। यंत्वाहिवा३र्त्रा३ह-न्तम। हारोइन्द्र। परावा१ता२३४ः। अर्वा३४चीनाः। माघवंत्सो। मपाइना१या२३४इ। उग्रा३४ऋष्वा३इ। भिरो२३४वा। गा५होइहाइ॥ २२॥ ६९

हे "वृत्रहन्तम!" वृत्रं हतवान् वृत्रहा अतिशयेन वृत्रं हतवान् वृत्रहन्तमः यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः([1]) (अनो नुट् (८,२,१६) इति तमपो नुट्) हे तादृशेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व" (हिरवधारणे) आत्मीये रथे योजयैव। हे "मघवन्!" धनवन् "उग्रः" उद्गूर्णबलस्त्वं "सोमपीतये" सोमस्य पानार्थं (दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्([2])) "अर्वाचीनो" ऽस्मदभिमुखः "ऋष्वेभि" ऋष्वैर्दर्शनीयै "र्मरुद्भिः" सार्द्धं "परावतः" (दूरनामैतत्) दूरे वर्त्तमानात् द्युलोकात् "आगहि" आगच्छ॥ ८॥ ६९

---

I आजीगर्त्तम्।

(१)—'अचोर्भ घस्य वा हन्तरित्यर्थः'-इति वि०।

(२—मिघण्टु तृतीय षड्विंश न्निम ष्टदम्।

अथ दशमी

नृमेधऋषिः।

२ ३ १र २र ३ १ २
त्वामिदाह्योनरोपीप्यन्वज्रिन्भूर्णयः।

१२ ३ १ २ ३ २ ३ १ ३ १ २३र २
सइन्द्रस्तोमवाहस*इहश्रुध्युपस्वसस्मागहि ॥ १० ॥ ७०

३र ४ ५र २ ३ ४र ५ ५ २१ २ १
I त्वामिदा। ह्योइ। हियोनराइए। अपाइप्यन्वा।

२ ३ ५ १ २ १र २र १ २
ज्राइन्भूर्णा२३४याः। सइन्द्रस्तोमवाहसः। इहाश्रुधा।

हे "वज्रिन्!" इन्द्र! त्वां "भूर्णयो" हविर्भरणशीला(१) "नरः" कर्मणां नेतारो यजमानाः(२) "इदा" अद्य "ह्यः" पूर्वद्युश्च(३) "अपीप्यन्" सोममपाययन्(४)। हे इन्द्र! स त्वं

---

* "स्तोमवाहसाम्"-इति ऋक्पाठः।

---

७० उत्तरार्चिकस्य २,१,१४,१ = ऋग्वेदस्य ६,७,३,१ = ऊह्रे२,४—१८,२,८।

I माधुच्छन्दसम्।

(१)—'तस्मिन्नेव वेदिप्रदेशे कर्मकरणार्थं भ्रमणशीलाः'-इति वि०।

(२)—'ऋत्विगलक्षणा मनुष्याः'-इति वि०।

(३)—सर्वकालमित्यर्थः।

(४)—'प्यायी ओप्यायी वृद्धौ वित्यस्येद रूपम् वर्द्धयन्तीत्यर्थः'-इति वि०।

३र २ ३र २ १ २ ३र १ ३र २ १र
औ॒हो॑३४वा॒हा॒इ । उपा॒स्वासा । औ॒हो॑३४वा॒हा । रमा-
२ १
गा॒ह॑ हा॒३४३इ । ओ॒२३४५इ । डा ॥ २३ ॥ ७०

"स्तोमवाहसः" (षष्ठ्यर्थे प्रथमा) स्तोमवाहसां स्तोत्रवाहकाना-मस्माकं स्तोत्रम् "इह" यज्ञे "श्रुधि" शृणु "स्वसरं" गृहं च । (दुर्याः स्वसराणीति (नै० ३,४,१०) गृहनामसु पाठात्) "उपाह्व" उपागच्छ ॥ १० ॥ ७०

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

अथाष्टमे खण्डे—

मैषा प्रथमा ।

द्वयोर्वसिष्ठऋषिः ।

१ २ ३ २ ३ १ १ ३ २ ३ २
प्रत्यु अदर्श्यायत्यू३च्छन्ती* दुहितादिवः ।
१ २ ३ १ ५ ३ १ २३ २ ३ १ २ ३ १ २
अपोमहीवृणुतेचक्षुषातमोज्योतिष्कृणोतिसूनरी ॥ १ ॥७१

* "व्यु१च्छन्ती"-इति ऋग्वेदीयः पाठः, इहत्योपि सायण-सम्मतः परं न क्वापि पुस्तके तथोपलभ्यते ।

७१ उत्तरार्चिकस्य १,२,१४,१ = ऋग्वेदस्य ५,६,१०,१ = ऊहे२१,२,८—१२--१५ = ऊह्य१,३—५,२ ।

२ १ ३ २ १ ३ २
। प्रताइ। इहा। आइ। इहा। उवद। शौ३-

१ २ १ ३ २ १ ३ १ र
आयती। उक्था। इहा। आ। इहा। तीद। हो-

१ ७ १ ७ १ ३ २ १ ३ २
३ताद्दिवा २ः। आद्दिवा २ः। अपो। इहा। ओ। इहा

१ र २ र १ ७ १ ७ र १
माहोवृणुते च। तृपातमा २ः। आतमा २ः। ज्योताइ।

३ २ १ ३ २ र १ ७ १
इहा। आइ। इहा। कृणो। ती३सूनरी २। ओनरी-

१
२३४३। ओ२३४५इ। डा॥ २४॥ ७१

"आयती" आगच्छन्ती "व्युच्छन्ती" तमांसि विवासयन्ती वर्जयन्ती "दिवः" द्युलोकस्य सूर्यस्य(१) "दुहिता" पुत्री(२) एवंभूता उषाः "प्रत्यदर्शि" सर्वैः प्रतिदृश्यते (उद्गीत पूरणः)

। उषसः।

(१) - यद्यपि द्यौर्नहि सूर्यपर्यायः तथापि द्युवाचक स्वादि-पदस्य तत्पर्यायत्वाद्-स्यापि तत्वमत्रतम। तथाहि—"स्वः, पृश्निः, नाकः, गौः, विष्टप, नभः-इति षट् साधारणानि" इति नि॰ नै॰१,४। "साधारणान्युत्तराणि षट् दिवश्चादित्यस्य च"-इति च यास्ककृत तद्व्याख्यानम् नै॰ नै॰२,१३। वस्तुत आदित्यस्य द्युस्थत्वात द्युवाचक-शब्देन द्युशब्देन चोपचारात् सुग्रहः। तदुक्तम् "सूर्यो द्युस्थानः" नै॰ दै॰ १,५।

(२) -'द्युलोके जायमानत्वात दिवः दुहिता'-इति वि॰। अतएव प्रजापत्यापर-पर्यायस्यादित्यस्य प्रतिदिनं प्रथमं पश्चात् भाव्यमानत्वात कन्या बलात्कारापवादः।

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २
इमाउवान्दिविष्टयउस्राहवन्तेअश्विना।

३ १ २ ३ १ २ ३ १ २ ३ १र २र
अयवामह्वेवसेशचीवसूविशंविश२ंहिगच्छथः॥ २ ॥ ७२

२र र ३ ५र २र र ३
। इमाउवान्दिविष्टयार२३४ऐही। उस्राहवन्तेअश्विना

सैषा "मही" महती। यद्वा मही महत्त्वात्मो नैशं तमोन्धकारं (अप उ इति निपातद्वयसमुदायः। अपेत्यस्यार्थे) "अपोर्णुते" अपवृणोति। कथं? "चक्षुषा" दर्शनेन। एवं कृत्वा "सूनरी"। जनानां सुष्ठु नेत्री(३) "उषाः" "ज्योतिः" प्रकाशं "कृणोति" करोति।

"अपो मही वृणुते चक्षुषा" इति छन्दोगाः। अपो महि व्ययति चक्षसे" इति बह्वृचाः॥ १ ॥ ७१

"इमाः" "दिविष्टयः" दिवमिच्छन्त्यः प्रजाः ऋत्विजोपि

७२ उत्तरार्चिकस्य १,२,१५,१ = ऋग्वेदस्य ५,५,२१,१ = आरण्यके ४,१,१५—१६ = ऊहे २१,२,१० = ऊह्ये १,४-५,३।

I अश्विनोः साम।

(३) -- "शोभनाः नरः यस्याः स्तावकास्तेन सा सूनरी, शोभनैः स्तावकैर्नरैः सम्बध्यत्यर्थः" इति वि०।

अथ तृतीया।

अश्विनौ वैवस्वतावृषी।

७ ३ १ २ ३ १ २ ३ १ २
कुष्ठः कोवामश्विनातपानोदेवामर्त्यः।

५र २ र र र ५र २
२३४ऐ ही। अयंवामक्नवसेशचीवसू२३४ऐ ही। विशंवि-

३ ५र ४
शꣳहिगच्छथा२३४ऐ ही। होपुइ। डा॥ २५॥ ७२

(उद्गातृ चार्थे। हे "अश्विना" अश्विनौ!(१) उस्रौ! वासकौ!(२) "वां" युवां "हवन्ते" आह्वयन्ति। अयमहं वसिष्टोपि हे "शचीवसू" कर्मधनौ! "वां" युवां "अवसे" ऽस्मद्रक्षणाय युवयोस्तर्पणाय वा "अह्वे" आह्वयामि। किमर्थमेवं प्रजामध्यय अपीत्याद्रोक्तिरिति तत्राह। "विशंविशं हि गच्छथः" हि यस्मात् सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छथः खलु, तस्मादेव मुच्यत इति॥ २॥ ७२

---

(१)—"अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत्कावश्विनौ द्यावापृथिव्या वित्येकेऽहोरात्रावित्यके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृता वित्यैतिहासिकाः। तयोः काल ऊर्द्धमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनुतमोभागो हि मध्यमो ज्योति भाग आदित्यः।"-इति नै० दै० ६.१।

(२)—'उस्रे' ति गोनाम। लुप्तोपमं चेदं द्रष्टव्यम् उस्रा इव। यथा गावः स्वान् वत्सकान् हवन्ते आक्रन्दन्ति तद्वत्' इति वि०।

३ १ २ ३ १र २र ३ २ ३ २ ३ १ २ १ १ २
घ्नतावामस्नयाक्षयमाणोऽᳫशुनेत्थमुत्र्प्राद्दन्यथा॥ ३॥७३

४ ५ ४र ५र र ४ १ र २रर १ ७ २
I कुष्ठःकोवामश्विनाञ्चा। तापानोदे। वामक्षीयाः३।

१ २ २ ३ १ २र २ २ १ २ २
द्दोवा३द्दा३४इ। घ्नता३४वामा१। अ्प्राया३। द्दोवा३द्दा

३ २ २र २ १ १ १ २ २
३४इ। क्षपा३४माणाः। आᳫशूना३। द्दोवा३द्दा३४इ।

३ २ ३ २ १ ३ २ ५र र १
इत्था३४मुवा३त्। उवा२न्। यथा३४औद्दोवा। ऊ२-

५
३४पा॥ २६॥ ७३

"अश्विना" अश्विनौ! हे देवा देवौ द्योतमानौ! "वां" युवां "कुष्ठः" कौ पृथिव्यां वर्त्तमानः "को" मर्त्यः मरण-धर्मा-मनुष्यः स्तोता "तपानः" तापनः प्रकाशको भवति इति शेषः। न कश्चिच्छक्नुयादित्यर्थः। "वां" युवयोरर्थाय "अस्नया" (अस्न-शब्दाङ्गिसो यादेशः(१) व्यासैरभिषवसाधनैरश्मभिः(२) "घ्नता" हन्यमानेन अभिषूयमाणेन "अंशुना" सोमेन। यद्वा। अस्मा-

---

I अश्विनोः संयोजनम्।

(१)—"सुपांसुलुक पूर्वसवर्णाच्छे याडाड्याजालः। (७,१,३९)

(२)—'अस्नया क्षुधा' इति वि०।

अथ चतुर्थी।

प्रस्कण्व ऋषिः* ।

३ २ ३ १ २ ३ २ ३ ३ १ २
अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।

१ २ ३ १ २ ३ १ २ २ ३ ३ १ २
तमश्विना पिबतन्तिरो अह्न्यं धत्तꣳ रत्नानि दाशुषे ॥ ४ ॥७४

३ २ ५ २ ४ ५ ५ २ १
। I अया३४म् । अयंवाम्म । धुमत्ताईमाः । सुतः

२ ३ २ १ २ ३ २ ३ २ ३ २ २
सोमो२दिविष्टिषु । ओ३हा । ओ३हा३४ । ओहा ।

भिरभिषुतेन "घ्नता" युवामभिगच्छता "अंशुना" सोमेन "चय-माणः" चोयमाणो यजमानः "इत्थमु" इत्थमेव भवति अत्यन्तं समृद्धो भवतीत्यर्थः । "आहन्" यथा अभिमतान्नरसादिभक्षण-वान् राजादिरिव । स यथा प्रवृद्धो दृष्टान्तविषयो भवति तद्वदयमपि भवतीत्यर्थः ॥ ३ ॥ ७३

हे "अश्विना" अश्विनौ ! "वां" युवयोः "दिविष्टिषु" दिवएषणेषु यज्ञेषु "अयं" पुरोवर्त्ती सोमः "सुतो" अभिषुतः । कौ-

* 'कुत्सस्यार्षम्' इति वि० ।

७४ ऋग्वेदस्य १,४,१,१ ।

I अश्विनोः साम ।

अथ पञ्चमी ।

मेधातिथि-मेध्यातिथी ऋषी* ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आ*त्वासोमस्यगल्दयासदायाचनद्दञ्जगा† ।
१ २ ३ १र २र ३ १र २र ३ १ २
भूर्णिंम्मगन्नसवनेषुचुक्रुधंकईशानंनयाचिषत् ॥ ५ ॥७५

१ र र २ १ २ १ २
तामश्विनापिबतन्तिरोअह्नियम् । ओ३हा । ओ३हा३४ ।
३र २ १ २ १ २ १ २ ३र २
ओहा । धत्ता२रा१ना २ । ओ३हा । ओ३हा३४ । ओहा ।
१ १ ३ ५र र ३ ५
निदा२३ । प्र२षा२३४ओहावा । ऊ२३४पा ॥ २७॥७४

इशः ! "मधुमत्तमः ।" अतिशयेन माधुर्यवान् । "तिरोअन्ह्य"(१) तिरोभूते पूर्वस्मिन्दिनेऽभिषुतं तं सोमं "पिबन्त" । "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि रमणीयानि धनानि "धत्त" प्रयच्छतं ।

"दिविष्टिषु" "ऋतावृधे" इति च पाठौ ॥ ४ ॥ ७४

* 'प्रगाथस्यार्षम्' इति वि० ।

* 'मा'-इति । † 'गिरा'-इति च ऋग्वेदीयः पाठ ।

७५ ऋग्वेदस्य ५,७,१३,५ ।

(१) अहनिभवम् अन्ह्यम् । 'तिरो अन्ह्यं तृतीयसवनिकम् । अथवा तिर इति पाप्मना..., प्राप्ते यागाहनि भवः । तिरो अन्ह्याः त तिरो अन्ह्यम्' इति वि० ।

५र र र २ १ ३ ५र र १ ५र
I आत्वासोमा। स्य। गल्दा२या२३४औहोवा। सदा-

१र २१ १ २ ३ ५ २ १ २र
२याचन्नह्म्भियार३। भूर्णाऔ२३४वा। मृगन्नसवनेषुच्

हे "इन्द्र!" "त्वा" त्वां "सवनेषु" यज्ञेषु "सोमस्य" "गल्दया"(१) गालनेन आस्रावणेन। "ज्या" जयशीलया स्तुत्या च (अतएव गिरेति बह्वृचाः पठन्ति(२)) तया युक्तो "अहं" "सदा" सर्वदा "याचन्" याचमानः सन् "आचुक्रुधं" मा चुक्रुधं क्रमोधयानि (आ इति प्रतिषेधार्थः, निपातानामनेकार्थत्वात्। अतएव बह्वृचाः मात्वेत्यामनन्ति) बहुशो याच्यमाने त्वयि क्रोधो जायते तं सोमगालनेन स्तुत्या चापनयामीत्यर्थः। कीदृशं त्वां? "भूर्णिं" भर्त्तारं(३) "मृगं न" सिंहमिव भीमं (स्वामिनः इन्द्रस्य

---

I सोमसाम।

(१)—'गल्दा'-इति वाङ्नामसु चतुःपञ्चाशत्तमेषट्‌कम् (१,११)। 'गल्दा धमनयो भवन्ति गलन मासु धीयते'-इति नैरुक्तम (६,२४)।

"आत्वा विशन्त्विन्दव आगल्दा धमनीनाम्"—

(ऋ०८म०१अ०१सू०२०मन्त्रार्द्धः)

आगलना धमनीनाम्-इति तु मैक्षमम्। मात्वा सोमस्य गल्दयेति बह्वृकपठितमन्त्रव्याख्यानावसरे 'सोमस्य गालनेनेति यास्कश्च।

(२)—आशब्दोऽत्रगिर्वाचीत्यत्र गिरेति बह्वृकपाठ एव मानम्।

(३)—'भ्रमणशीलम्'-इति वि०।

अथ षष्ठो।

देवातिथि*ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

अध्वर्योद्रावयात्वꣳसोममिन्द्रःपिपासति।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २

उपोनूनंयुयुजेवृषणाहरीआचजगामवृत्रहा॥ ६ ॥ ७६

१२ २ १ २ १ १ २

क्रुधम्। कईश्रा२३नाम्। नायाचिषत्। इडा२३भा

१

३४३। ओ२३४५इ। डा॥ २८ ॥ ७५

४ २ २ ४ १२ १

I अध्वर्योद्रा५वयातुवाम्। सोममिन्द्रा२ः। पिपा-

याचने लौकिकं न्यायं दर्शयति) —लोके को वा पुरुषः "ईश्रा-नम्" ईश्वरं स्वामिनं न "याचिषत्" न याचेत सर्वएव हि याचते। अतोऽहमपि त्वां स्वामिनं याचे इति भावः॥ ५ ॥ ७५

हे "अध्वर्यो!" अध्वरस्य नेतस्त्वं "सोमं" द्रावय उत्तरवेदि-लक्षणं स्थानं प्रापय। यद्वा। रसात्मना द्रवणशीलं कुरु।

---

* 'देवतातिथिरिति वि० पाठः।

---

७६ ऋग्वेदस्य ५,७,३२,१।

I आजमायवम्।

अथ सप्तमी।

द्वयोर्वसिष्ठऋषिः।

अभीषतस्तदाभरेन्द्रज्यायःकनीयसः।

पुरूवसुर्हिमघवन्बभूविथभरेभरेचहव्यः॥ ७ ॥ ७७

साऽऽती २। उपो२नूनं युयुजे३। षाणा१ हारी २। आ

चाजा२३गा। मवृत्रहा। औ३होवा। हो५इ। डा॥

॥ २८ ॥ ७६

अभिषुण्वित्यर्थः। किं कारणमिति चेत्? "इन्द्रः" "पिपासति" सोमं पातु मिच्छति (त्वयैतत्कथमवगतमितिचेत्तत्राह-"वृषणा" वर्षितारौ युवानौ वा। "हरी" अश्वौ "नूनं" अद्य "उपो युयुजे" उपगम्यैव सारथिर्योजितवान् रथे। "वृत्रहा" वृत्रस्य हन्ता(१) इन्द्रस्य "आ जगाम" आगतवान्॥

"उपोनूनं" "उपनूनम्"-इति पाठौ॥ ६ ॥ ७६

७७ ऋग्वेदस्य ५,३,२१,४।

(१)—'वृत्रहा मेघस्य हन्ता'-इति वि०।

I अभीषतस्तदाहाउ। भरा। इन्द्रज्यायः कनीया
२३साः। पुरूवसुर्हिमघवन्बभूवा२३इया। भराइभार२३
रे। चहव्यः। इडा२३भा३४३। औ२३४५इ। डा॥
॥ ३० ॥ ७७

हे "ज्यायो" ज्यायन्निन्द्र! ("आमन्त्रितं पूर्वमविद्यमानवदि-तीन्द्रपदस्याविद्यमानवद्भावात् ज्यायइत्यस्य सर्वानुदात्तत्वाभावः। नकारस्य रुत्वं(१) व्यत्ययेन नुमभावो वा(२) "कनीयसः" सतो मम "तत्" प्रसिद्धम्। "अभ्याभर" अभ्याहर। हे "मघवन्" धनवन्निन्द्र! "पुरूवसुः" बहुभिर्वननीयो "बभूविथ" असि। "भरे भरे" सङ्ग्रामे(३) "च" "हव्यो" ह्वातव्यश्च बभूविथ(४)॥

"मघवन् बभूविथ"-इति छन्दोगाः। 'मघवत्सनादसि"-इति बह्वृचाः॥ ७॥ ७७

I समुद्रप्रैयमिधम्।

(१)—"रुमम्बुद्धौ (८.३,१)"-इति।

(२)—"व्यत्ययोबहुलम् (३,१,८५)"-इति।

(३)- 'भरे' इति सङ्ग्रामनामसु पञ्चमं नैघण्टुकम् (२,१७)।

(४)—'एतदुक्तं भवति—यस्मात् ईश्वरः प्रभुश्च तस्मादाभरत्वाशंः'-इति वि०।

अथाष्टमी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ र २ र
यदिन्द्र यावतस्त्वमेतावदहमीशीय।
३ २ ३ १ २ ३ १ २ ३ १ २
स्तोतारमिद्दधिषेरदावसोनपापत्वायरꣳसिषं ॥ ८॥ ७८

२ १ ४ र ५ २र १र र र
I यदिन्द्रा२३यावतस्तुवाम्। एतावदहमीशीया।
२ र २ २र १ २ १र
स्तोतारा२३मीत्। दोधिषे। रदावा१सा२उ। नपापा२३
५ १ २ ३ ५ ४ ५
४त्वा। यारौवा३ओ२३४वा। सा५इषोऽ६हाइ ॥ २१ ॥

५ ३ २र ३ ४ ५ १ २ १ २ ४ ५
II यदिन्द्रयावतस्तुवाम्। आइता३। वादा३हामी।

हे "इन्द्र!" "यद्" यतो(१) "यावतो" धनस्य "ईशिषे" "एतावत्" (षष्ठ्यालुक्(२)) एतावतो धनस्य "अहमीशीय" ईश्वरो

७८ उत्तरार्चिकस्य ८,१,१२,१ = ऋग्वेदस्य ५,३,२०,३ = ऊहे २२,२० = ऊह्ये ५,२०—५,२२।

I,II वैरूपे द्वे।

(१)—'यच्छब्दो यदिशब्दसार्थे' इति वि०।
(२)—सुपां सुलुगित्यादिना।

अथ नवमी ।

नृमेधऋषिः ।

१ २ ३ १ २ ३ १र २र ३ १ २
त्वमिन्द्रप्रतूर्त्तिष्वभिविश्वाअसिस्पृधः ।

१ २ १ २र १ ४ ५र १ २
श्राया३ऽ१२। स्तोतारामो२३त्। दधिषेरदा। वासा३

१ २र १ १ २ ३ ५ ४
ऽ१२उ। नापापात्वा२३। यारौवाश्रो२३४वा। सा५-

५
दृषोद्दाइ ॥ ३२ ॥ ७८

भवेयम्। हे "रदावसो !" रदति ददाति वसूनीति रदवसुः(३) तादृश हे इन्द्र ततोऽहमस्मदीयं "स्तोतारम्" "इत् दधिषे" धनप्रदानेन धारयेयमेव। "पापत्वाय" क्षीणत्वाय(४) "न रंसिषं न दद्याम्।

"स्तोतारमिद्दधिषेरदावसोनपापत्वायरंसिषम्"-इति छन्दोगाः। "दिधिषेयरदावसोनपापत्वायरासीय"-इति बह्वृचाः ॥ ८ ॥ ७८

---

(३)—रदावसो इति दीर्घमध्यपाठोऽपि क्वचि। "द्वाचोऽतस्तिङः"-( ६,३,१३५,)"-इति तद्भाष्यम्।

(४)—'पापभवाय पापात्मानः'-इति वि० ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३१
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ ६ ॥ ७९

I त्वमिन्द्रोहाइ। प्रतूर्त्तिष्वोवा। अभिविश्वाः। असाइस्पा१र्द्धा२ः। आशस्तिहाजनितावृ। त्रातू१रा-सा२इ। त्वां तू१र्या२। तरुष्यता। औ३होवा। हो-५इ। डा ॥ ३३ ॥ ७९

हे "इन्द्र!" "त्वं" "प्रतूर्त्तिषु" सङ्ग्रामेषु(१) "विश्वाः" सर्वाः "स्पृधो" युद्धकारिणीः शत्रुसेनाः(२) "अभ्यसि" अभिभवसि किञ्च। हे "तूर्य!" शत्रूणां वाधक इन्द्र! त्वम् "अशस्तिहा" देवानामशस्तीनां हन्तासि। "जनिता" असुरेभ्यः अशस्तीनां

* "विश्वतूः"-इत्यपि पाठः क्वचिद्दृग्वेदीयपुस्तके दृश्यते।

७९ उत्तरार्चिकस्य ८,१,८,१ = ऋग्वेदस्य ६,७,३,५= आरण्यके ८,१,३४।

I वैश्वदेवम्।

(१)—प्रकर्षेण तूर्यन्ते हिंस्यन्ते यत्र, स प्रतूर्त्तिः सङ्ग्रामः।

(२)—'स्पृधः'-इति सङ्ग्रामनामसु ऊनविंशतितमं नैघण्टुकम् (२,१७)। स्पर्धं कुर्वन्ति इति स्पृधयतेः क्विपि स्पृधः सङ्ग्रामकारिणीः सेनाः।

अथ दशमी।

नोधा ऋषिः*।

१२ २र ३ १र २र ३ १र ३र ३ १ २
प्रयोरिरिक्ष*ओजसादिवःसदोभ्यस्परि†।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
नत्वाविव्याचरजइन्द्रपार्थिवमतिविश्वंववक्षिथ‡॥ १० ॥८०

॥ इति द्वितीय-दशति ॥

जनयिता चासि। "तुरतः"(३) सर्वस्य शत्रुवर्गस्य हिंसिता चासि। "तरुष्यतः" बाधकांश्च(४) बाधमानोसि॥ ८॥ ७९

* "मेधसआर्षम्" इति वि०।

* "प्रचिरिरिक्ष"-इति
† "दिवोअन्तभ्यस्परि"-इति
‡ "पार्थिवमनुस्वधांववक्षिथ"-इति च
} ऋग्वेदीयाः पाठाः।

८० ऋग्वेदस्य ६,६,११,५।

(३)—तूरिति तूर्यतेर्हिंसार्थस्य रूपम्।

(४)—तरुष्यतिर्वधकर्मा तस्येदं रूपम्. तथाहि—"वनुष्यतिर्हन्तिकर्मा"-इत्यादि "तरुष्यतिरप्येवं कर्मे"ति नैरुक्तं द्रष्टव्यम् ५.२। विवरणकारस्तु 'तरुष्यतिर्वधकर्मा, तव यत्तु भिन्दन्ति तान् तरुष्यतः (ये त्वां दम्भ भिन्दन्ति तान्) प्रतिहिंसेत्यर्थः' इति व्याचष्टे।

१२ २ ५ २१ ३२ १
। प्रयोरिरिचओजसा६ए। दिवः सदोरभ्यस्परि। न

७ १२ ३ २ १ २२ ३ २
त्वाविव्या। औहोऽवा। चा। रजः। औहोऽवाइ।

१२ २ १ २ १
इपार्थिवाम्। अतिवार३इश्वाम्। वावक्षिथ। इआ२-

२ १
३भा३४३। ओ२३४५इ। डा॥ ३४ ॥८०

हे "इन्द्र!" यस्त्वं "दिवो" द्युलोकस्य "सदोभ्यः" स्थानेभ्यः(१) परिपर्यन्तेभ्यः "ओजसा" बलेनैव "प्र रिरिचे" प्रकर्षेणातिरिक्तो भवसि(२) (रिचेर्लटि बहुलञ्छन्दसीति श्लुः। प्रत्ययस्वरः) किञ्च। हे इन्द्र! "पार्थिवं" पृथिव्यां भवं "रजो" लोकः "त्वा" त्वां महता स्व-शरीरेण "न विव्याच" न व्याप्नोति (द्यावापृथिवीभ्यामपि त्वतः स त्वं बलेन समर्थोऽसीत्यर्थः) एवम्भूतः स त्वम् अस्मान् "विश्वम्" "अति" अतिक्रम्य "ववक्षिथ"।

I पुरीषम्।

(१)—'दिवः अवयवभूतानि सदःस्थानानि तेभ्यः। पञ्चमीनिर्देशात् आगत्येति वाक्यशेषः'-इति वि०।

(२)—'रिष हिंसायामित्यस्य मध्यमपुरुषैकवचने एतद्रूपं, यस्त्वं प्रकर्षेण हिंससीत्यर्थः। काम् सामर्थ्याच्छत्रून्'-इति वि०।

वोढमिच्छ(१) (वहेः सन्नन्तस्य छान्दसे लिटि रूपं मन्त्रत्वादाम-भावः॥

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्याष्टमः खण्डः॥ ८॥

॥ इति वार्हतमैन्द्रम्(२) ॥

असाविदेवमेकोनत्रिंशत्तासु प्रवोमहे।
त्रिपदोक्तविराडन्याम्त्रिष्टुभोष्टोर्ध्वविंशतिः(३)।
ऐन्द्रीषु तासु तार्क्ष्यस्य स्तुति रेषा त्यमुष्विति।
पर्वतेन सहेन्द्रस्य गीरिन्द्रापर्वतेत्यपि(४)॥

---

(१)—'ववक्षिथ' इति महन्नामसु चतुर्दशं नैघण्टुकम (३,३) अतएव 'महान् भवसी त्यर्थः'-इति वि०।

(२)—इन्द्रदेवताका वृहतीछन्दस्काः समिथे मन्त्रास्तेषां प्रकरण समाप्त मित्यर्थः।

(३)—असावि देवमित्यारभ्य कोऽर्थति अकपर्यन्तं एकत्रिंशत्, तत्र असावीत्यारभ्य ततचुरित्यन्तास्तृतीयदशदात्मका नवमखण्डात्मका वा ऋचो दश, ततः अवद्रप्सो इत्यारभ्य ओषधीभिरित्यन्ताश्चतुर्थदशदात्मका दशमखण्डात्मका वा ऋचो नव, ततः त्यमुष्वित्यारभ्य सजीवादित्यन्ताः पञ्चमदशदात्मका एकादशखण्डात्मका वा ऋचो दशेति सङ्कलनयोनत्रिंशत्। तासु ऋच् प्रवोमहे-इति तु षोडशतमा, त्रिपदा इयं विराट् इत्युक्ता त्रिपाद्विराट्छन्दस्का इति पूर्वाचार्यैः कथितेत्यर्थः। 'अन्याः अष्टोर्ध्वविंशतिः अष्टाविंशत्यृच ऋचः त्रिष्टुभः' इति सम्प्रति व्याख्यास्यमानानामृचां छन्दः-सङ्केतः।

(४)—ऐन्द्र-पर्व-गतानाम् प्रकरणफलादैन्द्रत्वं सिद्धमेव, तासु ऐन्द्रीषु ऋच् त्यमुषु-इति विंशतितमा ऋक्, एषा तार्क्ष्यस्य मध्यमस्थानाग्निविशेषस्य।तदाह यास्कः--"तार्क्ष्यः त्वष्ट्रा व्याख्यात (दै०४.२७)" माध्यमिकस्त्वष्टेत्याहुर्मध्यम च स्थाने समाम्ना-

तत्र नवमखण्डे—

सैषा प्रथमा।

द्वयोर्वसिष्ठऋषिः।

१ २ ३ १र २र ३ २ क २र ३ १ २ ३ १ २
असाविदेवंगोऋजीकमन्धोन्यस्मिन्निन्द्रोजनुषेमुवोच।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
बोधामसित्वाहर्यश्वयज्ञैर्बोधानःस्तोममन्धसोमदेषु॥१॥८१

I असौहोवा३हाइ। वो२३४दे। वाङ्गोऋ। जो कमन्धाः। न्यौहोवा३हा। स्मी२३४नी। द्रौजनु। षेमुवोचा। बोधौहोवा३हाइ। मा२३४मी। त्वाहरि।

"देवं" दीप्तं(१) "गोऋजीकं" गोभिः संस्कृतं गव्येन मिश्रित-मित्यर्थः(२)। "अन्धः" सोमरूप मन्नम् "असावि" अभिषुतम्।

---

८१ ऋग्वेदस्य ५,३,३,१ = आरण्यके ३,२९—३०।

I प्राकर्षम्।.

मोऽस्मिरिति प्राकपूर्णिः ( दे० २,१९ )] स्तुतिः; किञ्च 'इन्द्रस्यगौरिति सप्तविंशति समा अपिच 'इन्द्रापर्वता'-इति षड्विंशतितमा ऋक्, इयमपि पर्वतेन सह इन्द्रस्य स्तुतिः न केवलेन्द्रस्येत्यर्थः।

(१)—'देवं द्वितीयैकवचन मिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्य, देवस्य इन्द्रस्यार्थाय' -इति वि०।

(२)—गो-शब्देनेह गोविकारं गव्यम्, ऋजीकं च मिश्रम्।

अस्वयज्ञैः । वोधीहोवा३हाइ । ना२३४स्ता । ममन्ध ।
सो३४३ । मा३दा५इषुई५६ ॥ २५ ॥

॥ आइहो३ । आइहो । एहिया । ओ२३४वा ।
हाइ । असाविदेवङ्गोऋजीका३मान्धा३ः । आन्धाः ।
अन्धा । ओ२३४वा । हाइ । न्यस्मिन्निन्द्रोजनुषेमू३-
वोचा३ । वोचा । वोचा । ओ२३४वा । हाइ । वो-
धामसित्वाहर्यश्वा३याज्ञ३ः । याज्ञैः । यज्ञा । ओ२३
४वा । हाइ । वोधानस्तोममन्धसे।मा३दाइषू३ । आ-
इषु । एषुवा । ओ२३४वा । हाइ । आइहो३ । आइहो ।

[·] निहवः ।

अथ द्वितीया।

१ २ ३१२ ३१२ २र ३१२
योनिष्टइन्द्रसदनेअकारितमानृभिःपुरुहूतप्रयाहि।
३र २ २ ४ २ ४र र २ १११ १
एहियाँ। आ२३४वा। हा३४। औहोवा। ई२३४५॥

॥ ३६ ॥ ८१

"ईम्" अयम्(३) "इन्द्रः" "अस्मिन्" अभिषुते सोमरूपेऽन्धसि "जनुषा"(४) स्वभावत एव "न्युवोच" नितरां सङ्गतो भवति(५) (उच समवाये) [अथ प्रत्यक्षस्तुतिः(६)-हे "हर्यश्व!"(७) "त्वा" त्वां "यज्ञैः" स्तोत्रैः हविर्भिर्वा "बोधामसि" बोधयामः। "अन्धसः" सोमस्य "मदेषु" "नो" अस्माकं "स्तोमं" स्तोत्रं "बोध" बुध्यस्व॥ १ ॥८१ *

(३) -निरुक्ते तु 'ईम्'-इति पदपूरार्थे व्यवस्थितम्, तथाहि-"अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति" नै०१,९। अत एव ईमिति पादपूरणः'-इति वि०।

(४)—'जनुषेति तृतीयैकवचनमिदं पञ्चम्यकस्य स्थाने द्रष्टव्यम्, पञ्चमी-निर्देशाच्च प्रभृतीति वाक्यशेषः, जन्मनः प्रभृति'-इति वि०।

(५)—'उवोच उक्तवान्'-इति वि०।

(६) बोधेति मध्यमपुरुषयोगादित्यर्थः। तथाहि—"अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना"-इत्यादि नि०७,२।

(७)—हरी हरिद्वर्णौ अश्वौ यस्य, हे तादृश!।

* ॥ इति अष्टमः प्रपाठकः ॥

३ १२ ३२ १२ ३२३ १२ ३१२ ३१ २
असोयथानोवितावृधश्चिद्ददोवसूनिममदश्चसोमैः ॥२॥८२

४ ५ १ २ १ २ ३ ४ ५
I योनोः । तआइ । द्राइमद् । नाअकारी ।

४ ५ १ २ २ ३ ४ ५ ४ ५
तामा । नृभाइः । पुरूहू३ । ताप्रयाही । आमाः ।

१ २ १ २ ३ ४ ५ ४ ५ १
यथा । नो३अवि । तावृधश्चीत् । दादाः । वसू ।

२ १ २ २ ४
नी३मम । दा३४३ः । चा३सो५मा६५६इ ॥१॥

१ २ ३ २ ३ ४ ५ ४ ५ १ २
II योनिष्टआइ । द्रसद्नाइ । चोवा । आका३ ।

२ ३ ४र ५ ४ ५ १ २ २ ३ ४र ५
राइतमानृभीः । चोवा । पू । रूहू३ । ताप्रयाही ।

हे "इन्द्र !" "ते" तव "सदने" "सदनार्थं" "योनिः" स्थानम् "अकारि" । हे "पुरुहूत" बहुभिराहूतेन्द्र ! "नृभिः" नेतृभिर्मरुद्भिः(१) सार्द्धं "तं" योनिम् "आ प्रयाहि" । "नो"ऽस्माकं "यथा"

८२ ऋग्वेदस्य ५,३,८,१ ।

I,II योनिनी द्वे ।

(१)—'नृभिः ऋत्विग्भिः'-इति वि० ।

अथ तृतीया ।

गात्नृर्षिः* ।

अर्दहत्वमस्वजोविखानित्वमर्णवान्बद्धधानाꣳअरम्णः ।

मस्थान्तमिन्द्रपर्वतंवियदःस्वजद्धाराअवयद्दानवान्हन् ॥१॥८२

ह्वोवा । आमोयथा । नोअविता । ह्वोवा । वाद्धौ३ः ।

चाद्वहदीवस्व । ह्वोवा । नाद्ममदः । चसोमैः । ह्वो-

वा । ह्वोपुइ । डा ॥ २ ॥ ८२

"असः" भवसि । नोऽस्माकं "वृधश्चित्" वृधे वर्द्धनाय चासः । ("वृधेच"-इति बह्वृचाः) तथा "वसूनि" "ददो" ऽस्मभ्यं देहि । "सोमैः" अस्मदीयैः "ममदो" मादय च ॥ २ ॥ ८२

* "गृत्समदो नाम ऋषिः"-इति वि० ।

८३ ऋग्वेदस्य४,१,३२,१ ।

४ ५ ४     २ र १ २     १

I अदर्दृ हृत् । समसृजोविखानि । त्वमर्णा२३-

५     २ र र १ २     १र     ५ २

४वान् । बद्बधाना ऽरम्णाः । मह्वान्ता२३४मी । द्रप-

१ २     १     ५     १२१२र     १

र्वतंवियाद्वः । सृजाद्वा२३४राः । अवयद्दान । वा२३न्-

२     १

हा३४३न् । ओ२३४५इ । डा ॥ ३ ॥

हे "इन्द्र !" "त्वम्" "उत्सम्" उत्स्यन्दमानं मेघं "अदर्दः" विदारितवानसि । तदनन्तरं "खानि" मेघस्योदकनिर्गमनद्वाराणि(१) "व्यसृजः" विशेषेण सृष्टवानसि । किञ्च । "बद्बधानान्" "अर्णवान्" उदकवतो मेघान् "अरम्णाः" "विसर्जयसि" धारयसीत्यर्थः (अत्र रम्णातिर्विसर्जनकर्मा(२) ) हे इन्द्र ! "यत्" यस्त्वं (यदिति लिङ्गव्यत्ययः) "मह्वान्त" प्रभूतं "पर्वतं" मेघं(३) वितत-

(१)—'खानि खाकाशानि उदकाभिगमनस्रोतांसीत्यर्थः ।

(२)—अन्यत्र संयमनकर्मेत्याह माधवः ।

(३)—पर्वतमिति मेघ-नामसु नवमम् ।

४५ ४५ ४५ ४ १र र
II, अदर्दृत्समसृजाः। विखानि। त्वमर्णवान्बद्ध-

र र २१ २ १र २१ २
धानाꣳअरा२३म्णाः। महान्तमिन्द्रपर्वतंविया२३द्दाः।

१ २र १ ३र १२र १ २ ५र र
सृजाद्धारा२ः। अवा२यद्दान। वा२। या२३४औहो-

२ १११ १
वा। हा२३४५न्॥ ४॥ ८३

वानसि। "धारा" अपां "वि सृजत्" व्यसृजः विसर्जितवा-
नसि। "यद्" यदा "दानवान्" दनोः पुत्रान्। यद्दा। उदकस्य
दातॄन् मेघान् "अवहन्" अभिहतवानसि। [अत्र निरुक्तम्—
"अदृणा उत्समुत्सउत्सरणाद्दोत्सदनाद्दोत्स्यन्दनाद्दोनत्तेर्वाव्यसृजोस्य
खानि त्वमर्णवानर्णस्वत एतानित्यादि(४)]।

"वियद्दः सृजद्धारा अवयद्दानवान्"—"वियद्दः सृजो-
विधारा अवदानवं हन्—इति च पाठौ॥ ३॥ ८३

---

I,II औरक्षये द्वे।

(४)—इत्यादि पदेमाख्यापरांशोपाद्यः, तथाहि—(एतामित्यस्यानन्तरम्) "माध्यमि-
कान्मसख्यायान् बाबध्यमानानरम्णाः। रम्णातिः सयमनकर्मा विसर्जनकर्मा वा।
महान्तमिन्द्र पर्वतं मेघं यद् व्यवृणोर्व्यसृजो ऽस्य धारा अवहन्नेनं दानवं दान-
कर्माणम्"-इति।

अथ चतुर्थी ।

पृथीवैन्यऋषिः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
सुष्वाणासइन्द्रस्तुमसित्वासनिष्यन्तश्चित्तुविनृम्णवाजम् ।
१ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
आनोभरसुवितंयस्यकोनातनात्मनासह्यामात्वोताः ॥४॥८४

I सुष्वाणासाः । इन्द्रस्तु । मसित्वा । सनिष्य-
न्तश्चित्तुवि । नृ । म्णवा२३४जाम् । आनः । भरा-
ओ२३४वा । सुवितंयस्यको । ना । तानात्माना । सह्यि-
या । मा३४३ । तू३वोपूता६५६ः ॥ ५ ॥

II औ३होइ३होइ । सु२३४ष्वा । णासाः । इन्द्रस्तु ।

हे "इन्द्र !" "सुष्वाणासः" सोममभिषुतवन्तो वयं त्वां "स्तु-
मसि" स्तुमः । हे "तुविनृम्ण" बहुबल बहुधन वा इन्द्र !
"वाजं" चरु-पुरोडाशादि-लक्षणमन्नं "सनिष्यन्तः" दत्तवन्तः
सम्भक्तवन्तो वा वयं त्वां स्तुमः । यत एवं अतो हेतोः "नो"
ऽस्मभ्यं "सुवितं" सुष्ठु प्राप्तव्यं शोभनं धनम् "आभर" आहर
प्रयच्छ । "यस्य" यद्धनमतिप्रियत्वेन "कोना" (कनैः कान्तिकर्मण

८४ ऋग्वेदस्य८,८,८,१ ।

I, II पार्थे द्वे ।

२ ३ ५ १ २ २ ३ ५ १
मसित्वा। औ३हो३हो३। सा२३४नी। घ्यन्ताः।

२ १ २ ३ ४ ५ २ १ २ ३
चीऽ३त्तुवि। नृम्णवाजाम्। औ३हो३हो३। आ२३४

५ १ २ २ ३ ४ ५ २ २
नाः। भरा। सुविता३म्। यस्यकोना। औ३हो३

२ ३ ५ १ २ १२ २ २ ४
हो३। ता२३४ना। त्मना। सह्निया। मा३४३। तू३वोपु-

ताई५ई: ॥ ६ ॥ ८४

इदं रूपं। पचाद्यच्। अकारस्य व्यत्ययेन ओकारः। प्रथमैक-वचनस्याकारः) कामयमानो भवसि तद्धनमाभरेत्यर्थः(१)। वयं च "त्वोताः" त्वया रचिताः सन्तः। "तना" (धननामैतत्(२) विस्तृतानि धनानि "त्मना"(३) आत्मना स्वयमेव अन्य-नैरपेक्ष्ये-णैव "सह्याम" (सह अभिभवे। धातूनामनेकार्थत्वात्) त्वत्प्रसा-दाल्लभेमहि।

"सनिष्यन्तश्चित्तुविनृम्णवाजम्"-इति छन्दोगाः। "सस-वांसश्च"-इति बह्वृचाः।

"कोनातनात्मनासह्याम"-"चाकन्त्मनातनासनुयाम"-इति पाठो ॥ ४ ॥ ८४

(१)—'किं पुनरभि. भवेम? कोनाः. कुत्सिताश्च ते जनाश्च कोनाः। छान्दस-त्वात कु-शब्दस्य क-भावः। पञ्चम्येकवचनस्य छान्दसत्वाच्छादादेशः। कोनात्। कुत्सितात् जनाच्च शत्रोरित्यर्थः'-इति वि०।

(२)—तनेति धननामसु ऊनविंशतितमं नैघण्टुकम् २,१०।

(३)—"मन्त्रेष्वाङ्यादेरात्मनः। ६। ४। १४१।"-इत्यात्मनश्चाकारलोपः।

अथ पञ्चमी।

सप्तगुर्ऋषिः*।

जगृह्मा*तेदक्षिणमिन्द्रहस्तंवसूयवोवसुपतेवसूनाम्। विद्माहित्वांगोपतिᳪशूरगोनामस्मभ्यंचित्रंवृषणᳪरयिन्दाः॥५॥ ८५

I जगृह्मातेदक्षिणमोहाओहाइए। इन्द्रहा२३स्ताम्। वसूयवो। वसूपा३। ताइवसू। नाम्। ओ३। हा। ओ३। हा३ए। विद्माहित्वा। गोपतीश्म्। शूरगो। नाम्। ओ३। हा। ओ३। हा३ए। अस्मभ्यञ्चाइ। त्रा३०वृष। णाᳪरयिम्। दाः। ओ३। हा। ओ३। हा३ए। रयाइन्द्रा३उवा३। ऊ३४पा। औहोऔहोवा२३३५उ। वा। ई२३४५॥ ७॥

※ "सप्तगोरार्षम्"-इति वि०।

* "जगृभ्मा"-इति ऋग्वेदीयः पाठः।

८५ ऋग्वेदस्य८,१,३,१।

II जगृह्मातेदक्षिणम्। औहौहोवाहाइ। इन्द्रा
हार२३४स्ताम्। वद्धयवो। वसुपा३। ताइवसू। नौ।
वा३ओ२३४वा। हरिहाइ। विद्माचित्वा। गोपतीइ
म्। शूरगो। नौ। वा३ओ२३४वा। हा३हाइ। अस्मभ्य
म्हाइ। त्रा३०वृष्ण। ण७रयिम्। दौ। वा३ओ२३४वा।
हा३४। औहोवा। ई२३४५॥ ८॥

III होई२। होई२। होई२। जगृह्मातेदक्षिणम्।
इन्द्रहास्ता२म्। हास्ता२म्। हास्ता२म्। वसूयवोर
वसुप। तेवसूना२म्। सूना२म्। सूना२म्। वि-
द्माचित्वागोपतिम्। शूरगोना२म्। गोना२म्। गो-
ना२म्। अस्मभ्यञ्चित्रंवृष। ण७रयाइन्दा२। आइ-
न्दा२ः। आइन्दा२। होई२। होई२। होया२।
वा२३४औहोवा। ई२३४५॥ ९॥

---

I, II सौपर्णे द्वे।

४ ५र ४ ५र ४ ५र ५ ऽ
IV आऔहोइ । आऔहोइ । आऔहोऽ६वा । औ-

२ ऽ १ र २ १र २
३होइ । औ३होइ । औ२३होवा । जगृह्माताइ । दक्षिणा३म् ।

२ ३ ४ ५ ४ ५ ४ ५ २ र १ २
इन्द्रहस्तम् । द्रहस्ताम् । द्रहस्ताम् । वसूयवो । वसुपा३ ।

१ २ ४ ५ ४ ५ ४ ५ १ १र र
ताइवसूनाम् । वसूनाम् । वसूनाम् । विद्माहित्वा । गो

२ २ ३ ४ ५ ४ ५ ४ ५
पती३म् । शूरगोनाम् । रगोनाम् । रगोनाम् ।

२ १ २ १ २ ३ ४ ५ ४ ५
अस्मभ्यस्चाइ । चा३०वृष । णा०रयिन्दाः । रयिन्दाः ।

४ ५ ४ ५र ४ ५र ४ ५र ५
रयिन्दाः । आऔहोइ । आऔहोइ । आऔहोऽ६वा ।

ऽ २ ऽ २ १ र २ ५र र
औ३होइ । औ३होइ । औ२३होवा३४ । औहोवा ।

३ १ १ १ १
ई२३४५ ॥ १० ॥

५र र र १ २ १
V हाउहाउहाउ । ओ । होहोवा । ओ । हो

हे "वसुपते" ! वसूनां धनानां स्वामिन्निन्द्र ! "ते" तव

III,IV,V वामप्राणि त्रीणि ।

२ १र २ १ ३ ४ ५
होवा। जगृह्माताइ। दक्षिणा३म्। इन्द्रहस्तम्।

४ ५ ४ ५ १र१ २ २
द्रहस्तम्। द्रहस्ताम्। वसूयवो। वसुपा३। ताइ-

३ ४ ५ ४ ५ ४ ५ १ १र
वसूनाम्। वसूनाम्। वसूनाम्। विह्माहित्वा।

र २ २ ३ ४ ५ ४ ५ ४ ५
गोपती३म्। शूरगोनाम्। रगोनाम्। रगोनाम्।

२ १ २ १ १ २ ४ ५ ४ ५
अस्मभ्यन्धाइ। त्रा३०वृष। णा॒रयिंन्दाः। रयिन्दाः।

र र र १ २ १ २
हाउहाउहाउ। ओ। होहोवा। ओ। होहोवा।

१ २ ५र र ३ १ १११
ओ। हो। होर। वा२३४। ओहोवा। ई२३४५॥

॥ ११ ॥ ८५

"दक्षिणं" हस्तं(१) "वसूयवो" धनकामा वयं "जगृह्म" गृह्णीमः

---

(१)—यद्यपीन्द्रस्य तेजोरूपत्वात् हस्ताद्यभाव एव सिद्धान्तः तथाप्यत्र आरोपितत्वेन समाधेयम् ग्रावादीनामचेतन-प्रसिद्धानामपि तथा स्तुति-दर्शनात्। तथाच यास्कः—"अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—

"ऋष्वा त इन्द्र स्थविरस्य बाहू।

यत् सं गृभ्णा मघवन् काशिरित्ते ॥"

... अथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्ते एवाचेतनेष्वप्येतद् भवति "अभिक्रन्दन्ति हरितेभि रासभिः" इति "ग्रावस्तुतिः"-इत्यादि नि० दै० १,७।

अथ षष्ठी ।

वसिष्ठऋषिः ।

३ १ २ ३ १ २　　३ १र २ ३र ३ १ २ ३ १ २ ३ २
इन्द्रंनरोनेमधिताहवन्तेयत्पार्यायुनजतेधियस्ताः ।
३ १ २ ३ १ २ ३ २ ३ १र ३र ३ १ २ ३ १ २
शूरोनृषाताश्रवमश्वकामआगोमतिव्रजेभजात्वनः॥६॥८६

२ ३ ५ २ ३ ५ २ १
I इन्द्रन्ना२३४रो । नेमाधा२३४इता । हवन्ता-
२ ३ ५ २ ३ ५ २ १
२३इ । यत्पारा२३४याः । यूनाजी२३४ताइ । धिया-

(यथा बहुप्रद अर्थिनोऽस्मभ्यमदत्वा न गन्तव्यमिति हस्तं गृह्ण-
न्ति तद्वत्) हे "शूर" विक्रान्तेन्द्र" ! त्वां "गोपतिं" (अत्र वृत्यवृ-
त्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते) बह्वीनां गवां गोपतिं
"विद्म" जानीम । अतोऽस्मभ्यं "चित्र" पूजनीयं "वृषणं" वर्षकं
"रयिं(२)"धनं "दाः" धेहि ॥ ५ ॥ ८५

८६ ऋग्वेदस्य ५,३,११,१ =यजुर्वेदस्य २८,१ =आरण्यके
१,२,१—२—१४—१५ —२,२,१—२—३—४—५—६—७
—८—४,१४—४,२,१—१४—१६—१८—२०—५,४ —५,२,१४।

I गौरीवितम् ।

२रयिं गोलक्षणं धनम इति वि० ।

८१क,

२ ३ ५ १ ३ ५ २ १
स्ता२३ः। शूरोना२३४र्षा। ता३आवा२३४साः। चका-

३ ३ ५ २ ३ ५ १ २
मा२३इ। आगोमा२३४ती। व्रजाइभा२३४जा। त्वन्ना-

२ २ १ ३ ११११
३उवा३। ए३। उपा२३४५* ॥ १२ ॥ ८६

"यद्" यदा(१) "पार्य्याः(२)" युद्धे भरण-निमित्तभूतास्ताः प्रसिद्धाः "धियः" कर्म्माणि "यनजते" प्रयुज्यन्ते। तदा "नरो" नेतारो "यज्ञानां" सङ्ग्रामाणां वा "नेमधिता" नेमधितौ यज्ञे सङ्ग्रामे वा(३) यमिन्द्रं "हवन्ते" ह्वयन्ति। हे "इन्द्र!" स त्वं "शूरः" "नृषाता" नृणां सम्भक्ता(४)। "श्रवसो" बलस्य अन्नस्य(५) वा "चकामे" चकाने काम्यमाने सति "गोमति" गोयुते "व्रजे" गोष्ठे "नो" अस्मान् "भज" भागिनः कुरु।

"श्रवसश्चकाम"-"श्रवसश्चकाने"-इति पाठौ॥ ६ ॥८६

---

(१) 'यत् यस्मात्'-इति वि०।

(२) 'पार्य्याः पालयितव्याः प्राप्तव्याः'-इति वि०।

(३)—'नेमधितिः' सङ्ग्राम-नामसु पठितं नैघण्टुकम् (२,१७), यज्ञ-नामसु तु न दृश्यते। विवरणकारस्तु सङ्ग्रामार्थ एव स्वीकृतः।

(४)—'नृषाता—नरो मनुष्याः ऋत्विग्लक्षणास्ते सन्यन्ते सम्भज्यन्ते यत्रेति नृषातिर्यज्ञः। षन षण सम्भक्तावित्यस्येदं रूपम्। तस्मात् परस्य सप्तम्येकवचनस्य डादेशः। नृषाता—नृषातौ यज्ञ इत्यर्थः'-इति वि०।

(५)—हविर्लक्षणस्येत्यर्थः।

अथ सप्तमी।

गौरिवीतऋषि।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
वयःसुपर्णा उपसेदुरिन्द्रम्प्रियमेधा ऋषयो नाधमानाः।
१ २ ३ १ २ ३ २ ३ १र २र ३ २ ३ ३ ३ १ २ ३ २
अपध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान्॥९॥८७

५ र र १ र र ३ १ र
I वयोहाहाउ। सुपर्णा उपसेदुराइन्द्रम्। प्रियमे-
र र ३ ३ १ र र र ३ १ २
धाऋषयो नाधमा२३नाः। अपध्वान्तमूर्णुहि पूर्द्धिचा२३क्षूः।

"वयो" गन्तारः(१) "सुपर्णाः" सुपतनाः आदित्य-रश्मयः "इन्द्रम्" "उपसेदुः" उपसन्ना अभवन्। कीदृशाः? "प्रियमेधाः" प्रिययज्ञाः(२) "ऋषयो" द्रष्टारः(३) "नाधमानाः" प्रज्ञां याच-

८७ ऋग्वेदस्य ८.३,४.५।

I वैदन्वतम्।

(१)-"वयः पक्षिनामैतत् गन्तार इत्यर्थः"-इति वि०।

(२)—मेध इति यज्ञ-नामसु चतुर्थं नैघण्टुकम् ३.१७। प्रियमेधवदत्रिवदित्यस्य व्याख्यानावसरे तु 'प्रियमेधः प्रिया अस्य मेधा' इत्यादि यास्कः ३.१७।

(३) ऋषिरिति द्रष्टृपर्यायमिति नैघण्टु भाष्यादौ। "साक्षात्कृतधर्माण ऋषयो बभूवुः"-इत्यादि नि० १.२०।

मुमुग्धि। औ३होइ। आ२१। स्मा३न्निध। ये३-

४३। वा३वा५ह्वा६५६न्॥ १८॥ ८७

माना:(४) (याचनप्रकारउच्यते)· हे इन्द्र! "ध्वान्तम्" अन्धकारम् "अपार्णुहि" परिहर ("अपध्वान्तमूर्णुहीति येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदपहैवास्मात्तत्लुप्यत"-इत्यैतरेयब्राह्मण-मत्रानुसन्धेयम्) "पूर्द्धि" पूरय(५) "चक्षुः" तेजश्च(६)। "मुमुग्धि" मोचय च "अस्मान् निधयेव बद्धान्"। "निधा" पाश्या भवति पाश्या पाश-समूहः(७)। पाश-समूहेन बद्धान् यथा मुञ्चन्ति तद्वत्। (अत्र "वयो वेर्बहुवचन मित्यादि निरुक्तं(८) द्रष्टव्यम्॥ ॥७॥ ८७

---

(४) माधमाना: इत्यस्य याचमाना: इत्यर्थ: कृतो यास्केनैव नै०४,३।

(५)—"पूर्द्धि पूरय"-इति नि० नै०४,६।

(६)—"चक्षुः ख्यातेर्वा चष्टेर्वा"-इति नि०नै०४,३।

(७)—"विधा पाश्या भवति, यन्निधःदत्तं। पाश्या पाशसमूहः। पाशः पाशयते, र्विपाशनात्"-इति नि० नै०४,२।

(८)—नैगमकाण्डस्य तृतीयखण्डम्।

अथाष्टमी

वेनो भार्गव ऋषिः ।

नाकेसुपर्णमुपयत्पतन्तꣳहृदावेनन्तो अभ्यचक्षतत्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥८॥८८

I आ२याम । अयायम । औ३हो३इ । आ२इ । ऊ२ । नाकेसुपार्णमुपयात्पतन्ताम् । पतन्तम् । औ३हो३इ । आ२इ । ऊ२ । आ२याम । अयायम । औ३हो३इ । आ२इ । ऊ२ । हृदावेनान्तो अभ्यचाक्षतत्वा । क्षतत्वौ३ । हो३इ । आ२इ । ऊ२ । आ२याम । अयायम । औ३हो३इ । आ२इ । ऊ२ । हिर

८८ उत्तरार्चिकस्य ८,२,१३,१ = ऋग्वेदस्य ८,७,८,३ = आरण्यके ३,८,३ ।

I याम्म ।

एथपात्वंवरुणास्यदूताम्। स्यदूतम्। औ३होऽ३इ।
आ२इ। ऊ२। आ२याम्। अयायम्। औ३हो-
३इ। आ२इ। ऊ२। यमस्ययोनौशकुनांभुरण्यूम्।
भरण्युम्। औ३होऽ३इ। आ२इ। ऊ२। आ२-
याम्। अयायम्। औ३होऽ३इ। आ२इ। ऊऽ२।
वाहा३१उवा२३। ए३। दिवम्। ए३। दिवम्। ए३।
दिवम्। ए३। दिवा२३४५॥ १४॥ ८८

हे "वेन !"(१) "त्वा" त्वां "हृदा" हृदयेन मनसा "वेनन्तः" कामयमानाः स्तोतारः "नाके" अन्तरिक्षे "अभ्यचक्षत" अभि पश्यन्ति तदानीं त्वम् उपगच्छसीति शेषः। कथंभूतं ? "सुपर्णं" शोभन-पतनं "पतन्तं" अन्तरिक्षं गच्छन्तं। "हिरण्यपक्षं" हिरण्मयाभ्यां पक्षाभ्या मुपेतम्। "वरुणस्य" जलाभिमानिनो

(१)—'वेनति'-इति कान्तिकर्मसु चतुर्थं नैघण्टुकम्, (२.६) अर्चतिकर्मसु च द्विचत्वारिंशत्तमम् (३,१४)।

अथ नवमी।

बृहस्पति र्नकुलो वा ऋषिः।

१ २ ३१ २३२ ३ २ ३ १ २ ३२ ३ १ २ ३ १ २
ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः।

३ २र ३ १ २ ३ २ ३ २३ २ ३ १ २ ३ १ २
सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः॥९॥८९

देवस्य(२) "दूतं" चारम्। "यमस्य" नियामकस्य वैद्युताग्नेः(३) "योनौ" स्थाने अन्तरिक्षे अन्तरिक्षे "शकुनं" पक्षिरूपेण वर्त्तमानम्(४)। "भुरण्युं" भर्तारं वृष्टिदानादिना सर्वस्य जगतः पोषकं(५) (भुरण् धारण-पोषणयोः कण्ड्वादिः। अस्मादौणादिक उ प्रत्ययः॥ ८॥ ८८

८९ अथर्ववेदस्य ५,४,१।

(२)—वरुणो मेघ-वर्षण-हेतु-भूतो वायु विशेषः "वरुणो वृणातीति सतः"-इत्यारभ्य "वृष्टिर्वृणक्ति भूमिम"-इत्यन्तेन यास्कोक्तेः।

(३)—यमशब्दस्य तु नियामकत्व योगार्थं लभ्यम् "अग्निरपि यम उच्यते नि०दै०४,२०)"-इति "तृतीयो अग्निः (नि०दै०४,२१)" इति च यास्कोक्तेः वैद्युताग्नित्वञ्च लभ्यते तृतीयो अग्नि-इत्युक्तेः तृतीयस्थानो द्युलोकः, तस्य मध्यरूपोऽग्निरिति च लभ्यते। अतएवाह विवरणकृत 'यमस्य योनौ, यम आदित्य', तस्य योनिः स्थानं मण्डलं, द्युलोके यदा आदित्यमण्डलं तत्र अवस्थितम' इति —

(४) 'शकुन शक्त योनित आत्मानं कर्त्तुं समर्थ मित्यर्थः' इति वि०।

(५)- 'भुरण्यु' भरणशील मित्यर्थ' इति वि०। 'भुरण्यु' इति क्षिप्रनामसु अनु दृष्टमस्त नैघण्टुकम् २,१५।

I ब्रह्मा। ब्रा२३ह्मा। जज्ञानंप्रथमंपुरास्तात्।
विसाइ। वा२३इसो। मत सुरुचोवेनआवः। सबू।
सा२३बू। धियाउपमाअस्यवाइष्ठाः। सताः। सा२३-
ताः। चयोनिममतश्चवाइवा३४३ः। ओ२३४५इ। डा॥

॥ १५ ॥ ८९

II ऊवे३ह्वा३इ। ऊवे३हो३इ। हिपा३या। ब्रह्मज-
ज्ञा। ना३०प्रथ। मंपुरस्तात्। विसीमताः। सुरु-
चः। वेनआवाः। मबुधियाः। उपमाः। अस्यवि-
ष्ठाः। मतश्चयो। नी३मस। तश्चविवाः। ऊवे३ह्वा-

I, II ऋतसामनी द्वे।

१ ८ २ १ २ ५र
इड्।ऊवे३वा३इ।वि।षारः।आ२३४।औ-

र २ २१ २ २ २१ ३११११
होवा।ए३।ऋतममृतम् ए३।ऋतममृता२३४५म्॥

॥ १६ ॥ ८९

वेनो नाम कश्चित् कमनीयो(१) गन्धर्वः। तथाच शाखान्तरे "वेनस्तत्पश्यन्नित्यारभ्य गन्धर्वो नाम नित्याम्नातम्।

स च "वेनः" "परस्तात्" पूर्वस्मिन् काले "जज्ञानम्" उत्पन्नम् "अभिन्नं" वा "ब्रह्म" ब्राह्मण-जातिरूपं(२) "प्रथमम्" आद्य-शरीरम। अतोऽस्याः सर्वै दृश्यमानायाः "सुरुचः" शोभनायाः कान्तेः "आवो" रक्षितवान् (वसुमित्यनुग्रहसूचकः कश्चिदनुकरणशब्दः तथाविधं शब्दं मुखेनाभिव्यञ्जयन्। ब्राह्मण-शरीर-महत्या कान्त्या योजितवानित्यर्थः) स वेनः "बुध्न्याः" मूलं अन्तरिक्षं वा बुध्नः. तत्र भवाः. अस्योपमाः एतदीय-शरीर-कान्ति-सदृशाः, आदित्य-प्रकाशादि-रूपाः कान्तीः(३) "विष्ठाः" विशेषेण स्थापितवान् तथा "सतश्च" इदानीं विद्यमानस्य च "असतश्च" भविष्यद्रूपत्वेदानीमविद्यमानस्य च "योनिम्" उत्पत्तिकारणं निवास-स्थानं वा "विवः" विवृतवान् निष्पादितवानित्यर्थः ॥ ८ ॥ ८९

(१)—"वेनो वेनतेः कान्तिकर्मणः" इति नि०१०.३८।

(२)—'ब्रह्म-शब्देनादित्याख्यं च मन्यते' इति वि०।

(३)—'बुध्न्या दिशः' इति वि०।

अथ दशमी।

सुहोत्रऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
विरप्शिने वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः ॥१०॥९०

इति तृतीय-दशति॥ ३ ॥

I अपूर्व्याऔहोवाइ। पुरुत। मानियस्मै। म-
हेवीरा। याइतव। साइतुराया। विरप्शि। नाइ-
वज्रिणे। शा३४३०तमानि। वचांसिया। स्माइस्थ-

"अपूर्व्या" अपूर्व्याणि पूर्वैरकृतानि नूतनानि "पुरुतमानि" बहुतमानि "शन्तमानि" सुखकृत्तमानि "वचांसि" स्तुतिरूपाणि वाक्यानि "अस्मै" इन्द्राय "तक्षुः" ततक्षुः (तक्षतिः करोतीत्यर्थे। कुर्वन्ति स्तोतार इति शेषः। कीदृशाय ?

---

९० ऋग्वेदस्य ४,७,४,१।

I वारवन्तीयम्।

१ २ ४५　　२ ४ ५र　　१
वि। रायतन्नूः। स्थविरायतन्नुः। स्थवि। रा३४३।
२ ४　　१ १र　२ १ १ १ १
या३ता५न्नुई५६ः। स्थविरायतन्नू२३४५ः॥१७॥९०

"महे" महते। "वीराय" विविध-शत्रूणां मारयित्रे। "तवसे" तवस्विने बलवते(१)। "तुराय" त्वरमाणाय "विरप्शिने" विशेषेण स्तुत्याय "वज्रिणे" वज्रवते। "स्थविराय" प्रवृद्धाय।

इति श्रीसायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य नवमः खण्डः॥ ९॥

---

अथ दशमः खण्डः।

सैषा प्रथमा।

अस्याः परस्याश्च द्युतानऋषिः*।

१ २ ३ १ १　३ १ २　　३ १　३ २ ३ १ २ ३ १ २
अवद्रप्सअंशुमतीमतिष्ठदायानः†कृष्णोदशभिःसहस्रैः।
३ १ ३　३ २ ३ १ २ ३ २ ३ १ २　३ १ २　३ २
आवत्तमिन्द्रः शच्याधमन्तमपस्नीहितिंनृमणाअधद्राः‡॥१॥९१

---

* 'तिरश्चिफतानस्यार्षम्'-इति वि०।

† "इयानः"-इति,　‡ "स्नेहितीनृमणाअधत्त"-इति च ऋग्वेदीय पाठः।

---

९१ ऋग्वेदस्य ६,६,३४,३।

(१) —तवः इति बलनामसु पठितं नैघण्टुकम् २,९

I अवद्रा२३४प्सा: । आ॒ꣳशू॒मा२३४तीम्। आतीउ। ष्ठा२३४५त्। ईयाना२३४:क्र। ष्णोदाशा२३४भी:। साह्वा३। सा२३४५इ:। अवत्ता२३४मो। द्र:शाची२३४या। धामा३। ता२३४५म्। आप:स्नो२३४ह्वी। तिनृमा२३४णा:। अधा२द्रा२३४औहोवा। अधा३द्रा२३४५:॥ १८॥

II अवद्रप्साꣳहए। आꣳशूमतीमतिष्ठा२३त्। ईयानःकृष्णा:। दाशभि:सहस्रा२३इ। आवत्तमिन्द्रा:। शाचियाधमन्ता२३म्। अपास्नोहितीम्। नृमणा२३। अधा५द्रा होꣳइ। डा॥ १९॥

I,II सुरपर्विणी द्वे ।

I अवद्रोप्सअंशुमतीम्। औ३हो३४इ। औहोवा। आतीरष्ठात्। औ३हो३४इ। औहोवा। ईयानःकृष्णाः। औ३हो३४इ। औहोवा। दाश। भाइःसहस्रैः। औ३हो३४इ। औहोवा। आवत्तमिन्द्राः। औ३हो३४इ। औहोवा। शचि। याधमन्ताम्। औ३हो३४इ। औहोवा। अपास्नीहितीम्। औ३हो३४इ। औहोवा। नृमा२णा२३४औहोवा। अधा३द्रा२३४५ः॥२०॥

II अवद्रप्सअंशुमतीम्। ए३। औ३हो५वा। आतार३४५इष्ठा६५६त्। ईयानःकृष्णोदशभिःसहस्रैः। आवत्तम्। आइ। द्रा३शचि। याधमन्ताम्। अपस्नीहितिनृमणाः। ओवा। अधद्रा३आर२३४५॥२१॥९१

I,II सोमरगमि द्वे।

(अत्रेतिहास माचक्षते—पुरा किल कृष्णो नामासुरः दश-सहस्र-संख्याकै रसुरैः परिवृतः सन् अंशूमतीनामधेयाया नद्या-स्तीरे अतिष्ठत्। तत्र तं कृष्ण मुदक-मध्ये स्थितम् इन्द्रो बृहस्पति-महागच्छत्। आगत्य तं कृष्णं तस्यानुचरांश्च बृह-स्पति-सहायो जघानेति केचिदन्यथा वदन्ति। तेषां कथा-हेतुः— द्रप्स इत्युदक कणोऽभिधीयते। स तु सोमः 'द्रप्सश्चस्कंदे'त्यादिषु-सोमपरत्वेनोक्तत्वात्(१)। एतत्पदमाश्रित्याहुः—

"अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः।
नदी मंशुमतीं नाम अभ्यतिष्ठत् कुरुं प्रति।
तं बृहस्पतिनैकेन सोभ्ययात्तत्र वृत्रहा।
योत्स्यमानः सुसंहृष्टै र्मरुद्भि र्विविधायुधैः।
दृष्ट्वा तानागतान् सोमः स्व-बलेन व्यवस्थितः।
मन्वानो वृत्रहायान्तं जिघांसु मरिसेनया।
व्यवस्थितं धनुष्मन्तं त मुवाच बृहस्पतिः।
मरुत्पतिं रयिं सोम प्रेहि देवान् पुनर्विभो!।
सोऽब्रवीन्नेति तं शक्रः खड्ग एव बलाद्बली।
इन्द्राय देवानादाय तं पुनर्विधिवत्पुरा।
जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव।

---

(१) --निरुक्ताविदम् तथाहि "द्रप्स स्कन्न नक्षणा दैवेन. द्रप्सः सम्भृत-प्सानीयो

तदेवद्रप्सइत्यस्मिन्नृचे सर्वं निगद्यते। एतदनार्षत्वेऽस्मादर-णीयं भवति। एषोऽर्थः क्रमेण ऋचि वक्ष्यते। तथाचास्य ऋचो-ऽयमर्थः—

द्रप्सो द्रुतं सरति गच्छतीति "द्रप्सः"(पृषोदरादिः) द्रुतं गच्छन् "दशभिः सहस्रैः" दशसहस्र-सङ्ख्याकै रसुरैः "इयानः" इयमानः "कृष्णः" एतन्नामकोऽसुरः अंशुमतीं नाम नदीं मनु "अवातिष्ठत्" अवतिष्ठते। ततः "शच्या" स्व-कर्मणा प्रज्ञाने न वा(२) "धमम्" उदकस्यान्तरुच्छसन्तम्। यद्वा। जगद्भीतिकरं शब्दं कुर्वन्तं "तं" कृष्णासुर"मिन्द्रो" मरुद्भिः सह "आवत्" प्राप्नोत्। "अथ" अनन्तरं पश्चात् "तं" कृष्णासुरं तस्यानुचरांश्च हतवान् इति वदति। "नृमणाः" नृषु मनो यस्य सः। यद्वा। कर्म-नेतृषु ऋत्विक्षु एकविधं मनो यस्य स तथोक्तः। तादृशो भूत्वा "स्नेहितिं" (स्नेहितिर्वधकर्मसु पठितः (नि० नै० २,१९) हिंसित्रीं तस्य सेनाम् "अपद्राः" (द्राति: कुत्सित-गति-कर्मा। स इन्द्रः "अपगमयत्" अवधीदित्यर्थः। तस्यानुचरान् हत्वा तम् असुरं हतवानित्यभिप्रायः॥ १॥ ९१

---

भवति। सर्वे देवा पुष्करे त्वाधारयन्त। पुष्करमन्तरीक्षं पोषति भूतानि। उदकं पुष्करं पूजाकरं पूजयितव्यम। इदमपीतरत् पुष्करमेतस्मादेव पुष्करं वा पुष्पं पुष्यतेः"-इति नि० नै०५,१४॥

(२)—शचीति कर्म-नामसु द्वाविंशतितमं पदम् (नै०२,१) प्रज्ञा-नामसु च नव-मम् (नै०३,९)।

अथ द्वितीया।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
वृत्रस्यत्वाश्वमथादीषमाणाविश्वेदेवाअजहुर्येसखायः।
३ १ २ ३ १ २ ३ २ ३ २३ ३ १ २
मरुद्भिरिन्द्रसख्यन्तेअस्त्वथेमाविश्वाःपृतनाजयासि॥ २ ॥९२

I हा३। ओ३हा३। ओ३हा३। हाइ। वृत्रस्यत्वा। श्वसथात्। ईषमाणाः। विश्वेदेवाः। अजहू३ः। येस-खायाः। मरुद्भिराइ। द्रा३सखि। यन्तेअस्तू। अथेमावाइ। श्वा३ःपृत। नाजयासी। हा३। ओ३हा३। ओ३हा३। हा३४। औहोवा। आ औ३हो२३४५॥२२॥

II होये३। ह्याये३। ह्या। औहो२३४वा। हाइ। वृत्रस्यत्वा। श्वसथात्। ईषमाणाः। विश्वे-

९२ ऋग्वेदस्य ६,६,२३,२।

I,II घृषतो मारुतस्य सामनी द्वे।

र १ २ ३ ४ ५ २१ २
देवाः। अजह्न३ः। येमखायाः। मरुद्भिराइ। द्रा३-

१ २ ३र४५ २१र र २ १ २ ३
सखि। यन्तेअस्तू। अथेमावाइ। स्वा३:पृत। नाज-

४५ १ २ २१ २ २ ३र ५
यासी। हायि३। हयायि३। हया। औहो२३४वा।

२ र५र १ २ २ १ २ ११११
हा३४। औहोवा। आऔ२हो। आऔ२हो३२४५॥

॥ २३ ॥ ९२

हे इन्द्र! तव ये "विश्वदेवाः" प्राक् सखायः सङ्ग्रामे सखित्वं कुर्यामेति मित्राण्यभवन्। सर्वे देवाः "वृत्रस्य" वृत्रासुरस्य "श्वसथात्" (श्वसेरौणादिकोऽथप्रत्ययः ( , , )। सर्वान् आगच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वास मकार्षीत्) श्वासाद्भीताः सन्तः अतएव "ईषमाणाः" सर्वतः पलायमानाः "त्वा" त्वाम् "अजहुः" सङ्ग्रामे त्यक्तवन्तः। एवं सति हे इन्द्र! "मरुद्भिः" सह "सख्यं" सखिभावः "ते" तवास्तु। ये मरुतस्त्वां न परित्यजन्ति तैः सहेति। "अथ" अनन्तरम् "इमाः" विश्वाः सर्वाः "पृतनाः" शत्रुसेनाः "जयासि" स्वबलेनाभि-

अथ तृतीया।

बृहदुक्थऋषिः।

३ १ २ ३ १र २र ३ १र २र ३ १ २ ३ १ २
विधुन्दद्राणꣳसमने बहूनांयुवानꣳसन्तंपलितोजगार।

३ १ २ ३ १ २ ३ २उ ३ २ ३ १र २र
देवस्यपश्यकाव्यंमहित्वाद्यामसारसह्यःसमान ॥ ३ ॥ ९३

४ ५ १ ७ २ १ २ ३ ४
। वीधूम। दद्रादद्रा। णा३ꣳसम। नाइबहू-

५ ४ ५ १ ७ २ १ २ ३
नाम। यूवा। नꣳसानꣳसा। ता३०पलि। तोज-

४ ५ ४५ १ ७ २ १र २ ३ ४
गारा। देवा। स्यपास्यपा। श्या३कावि। यम्महि-

भवसि(१) (अनेन वृत्रघ्नं तमिन्द्रमाह(२)। अत्र मन्त्रे "इन्द्रो वै वृत्रं हनिष्यन्" इत्यादि ऐतरेय-ब्राह्मण मनुसन्धेयम् ॥ २ ॥ ९२

---

९३ उत्तरार्चिकस्य ९,१,७,१ = ऋग्वेदस्य ८,१,१९,५ = अथर्ववेदस्य १४,२६,९।

(१)—'वृत्रस्य' मेघस्य (क) 'श्वसथात्' आमर्षणात् गर्जितशब्दादेवेत्यर्थः 'ईषमाणाः' पलायन्तः 'विश्वे देवाः' सर्वे देवाः 'अजहुः त्यक्तवन्तः, के ? उच्यते—'सखायः' ये तव सखीभूता आसन्; केवलैर्मरुद्भिः (ख) हे इन्द्र! 'सख्यं' 'ते' तव 'अस्तु' (सोऽयं सकर्षे दृष्टव्यः)'-इत्यादि, वि०।

(क)—वृत्रः इति मेघ-नामसु अष्टाविंशतिपदम् नै०१, १०।

(ख)—"मरुतः मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा"-इत्यादि नि०दै०५,१२।

(२)—एष एव मन्त्रः पौराणिक वृत्रोपाख्याने बीजमिति भावः।

५ ४ ५ १ ७ २ १ २
त्वा। आद्या। ममाममा। रा३मह्वि। या३४३ः।

२ ४
सा३मा५ना६५६ ॥ २४ ॥

२ ३ ३ ११११ २१
II हउ४। आ४५। हउ। हउ२३४५। विधुं-

२ १ २ ३४५ २१र
दद्रा। णा३उसम। ना३बह्वनाम्। युवानउसा।

२ १ २ २ ४ ५ २र १ २ १र
ता३०पलि। तीजगारा। देवस्यपा। श्या३कावि।

२ ३ ४ ५ २ ३ ३ ११११
यम्महित्वा। हउ४। आ४५। हउ। हउ२३४४।

२ १र २ १ २ २ ४
अद्यामसा। रा३सह्वि। या३४३ः। सा३मा५ना६५६॥

॥ २५ ॥ ९३

अनया कालात्मक इन्द्रः स्तूयते—"विधुं" विधातारं सर्वस्य युद्धादेः कर्त्तारं(१) (वि-पूर्वो दधातिः करोत्यर्थे) तथा "समने" (अनन मनः प्राणनं। सम्यगनोपेते) सङ्ग्रामे(२) "बहूनां" शत्रूणां

I,II सोमसामनी द्वे।

(१)—'वृष्टि-प्रदानादिना उपकरणेन सर्वजगतः धारयितारम्'-इति वि०।

(२)—'समनम्' इति सङ्ग्राम नामसु पाठात् नैघण्टुकम् २.१७।

अथ चतुर्थी ।

द्युतानऋषिः ।

२ ३ २३१२३ १ २ ३ १ २ ३ १ २
त्वꣳह्यत्यशप्तभ्योजायमानोशत्रुभ्योअभवःशत्रुरिन्द्र ।
३ १र २र ३ १र २र ३ २ ३ १ २ ३ १ २
गूढेद्यावापृथिवीअन्वविन्दोविभुमद्भ्योभुवनेभ्योरणन्धाः ॥ ४ ॥ ९४

"दद्राणं" द्रावकम् । ईदृक्सामर्थ्यापेतमपि "युवानं" सन्तम् । "पलितोजगार"(³) निगिरतीन्द्र-कृपया । एवं मुक्त-लक्षणं वक्ष्य-माण-लक्षणं च "देवस्य" कालात्मकस्येन्द्रस्य "महित्वा" महत्त्वे-नोपेतं "काव्यं" सामर्थ्यं(⁴) पश्य हे बृहदुक्थ ! (ऋषिःस्वात्मान मामन्त्र्य वदति—) तथा यो जरां प्राप्तोऽद्य "ममार" म्रियते "स" "ह्यः" परेद्युः "समान" सम्यग् जीवति पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः(⁵) ॥ ३ ॥ ९३

९४ ऋग्वेदस्य ६,६,३५,१ ।

(३) —'पलितः' पलितत्वं वृद्धत्वस्योपलक्षणम्. वृद्धः स्वहम् जगार. अट सन्ताविति,अस्य उत्तमपुरुषस्यैकवचनमिदम् स्तौमीत्यर्थः' इति वि० ।

(४) 'कविर्मेधावी, तस्य भावः काव्यं कवित्वमित्यर्थः, कीदृशं पुनः कवित्वम् ? उच्यते —महित्वा महत्त्वेन स्वमाहात्म्येनेत्यर्थः' इति वि० ।

(५)—यास्कस्त्विम मन्त्रं व्याचष्टे—" 'विधुं' विधमनशीलं 'दद्राणं' दमनशीलं 'युवानं' चन्द्रमसं 'पलितः' आदित्यो 'जगार' गिरति स ह्यो म्रियते स दिवा समुदित इत्यधिदैवतम् । अथाध्यात्मं —विधुं विधमनशीलं 'दद्राणं' दमनशीलं 'युवानं' महान्तं 'पलितः' आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिमाचष्टे " इति नि० १४,१८ ।

५र र ४ २ १२१२र १र २र २ ५र
I औहोइतुवाम्। हवत्मग्नभ्योजायमाना२३४ः। औ-

र ४ १ १र १ २ ३ ५र र र ५
होअभा। नृभ्यांअभवः शचृरिन्द्रा२३४। औहोइगढे।

१र र २ १र २ ३ ५र र ५ १ २र
द्यावापृथिवीअन्वविन्दा२३४ः। औहोइविभू। मह्नरो-

१ १र १ ३ ११ ११
भुवनेभ्योरणन्धा२३४५ः ॥ २६ ॥

४ ३ २ ३ ५ २ १ २र १र २र
II त्वोहाइ। हव्यौवाओ२३४वा। मग्नभ्योजायमा।

१ २ १ २ ११११ ४ ३ २ ३ ५
नोवा३। औवा२३४५। ओग्रोहाइ। नृभ्यौवाउ२३४वा।

१ २ १ २ १ २ ३ २ १११ र ४
अभव.शचृरि। द्रोवा३। ओवा३४५। गढोहाइ।

२ ३ ५ २ १र २ १ २ १ २ १११
द्यौवाओ२३४वा। पृथिवीजन्ववि। दोवा३। ओवा३४५।

४ ३ २ ३ ५ १ २र १ २
विभोहाइ। मह्नयौवाओ२३४वा। भूवने। भ्योवा३।

१ २ १११ ४ ४
ओवा३४५। रणापुन्धाः। होऽ५इ। डा ॥ २७ ॥ ९४

I,II इन्द्रस्य द्वे।

अथ पञ्चमी।

वामदेव ऋषिः।

३ १र २र३ १ २ ३ १ २ ३ १ २ ३२ ३ १ २
मेडिन्नत्वावज्रिणम्भृष्टिमन्तम्पुरुधस्मानंवृषभंस्थिरप्स्नुम्।

३ २र ३ १ २ ३ १र २र ३ १ २ ३ १ २
कराष्यर्यस्तरुषोर्दुवस्युरिन्द्रद्युक्षवृत्रहंणङ्गृणीषे॥ ५ ॥९५

हे "इन्द्र!" "त्वं ह" त्व खलु "त्यत्" तदेतत् कर्म्म क्षतवानसि। किं तदुच्यते? "जायमानः" त्वं प्रादुर्भवन्नेव "अशत्रुभ्यः" शत्रुरहितेभ्यः "सप्तभ्यः" कृष्ण-वृत्र-नमुचि-वराहारादिभ्यः सप्तभ्यो बलवद्भ्यः प्राणिभ्यः "शत्रुः" "अभवः" सप्तभ्यः पूर्भ्यः शत्रुः शातयिता दारयिता अभवः (सप्त यत्पुरःशर्म्म-शार-दीर्दत्त इति हि निगमः) अथवा सप्तभ्यःसप्त होतृ-प्रभृतयो होत्रकाः, तदर्थं यज्ञेषु प्रादुर्भवन्नेव कर्म्म-विघ्नकारिभ्यः शत्रुरभवः। किञ्च। हे इन्द्र! त्वं "गूढ़े" संवृते द्यावापृथिव्यौ सूर्य्यात्मना प्रकाश्य अनुक्रमेण ते "अविन्दः" अलभथाः तथा "विभुमद्भ्यो" महत्त्व-युक्तेभ्यः "भुवनेभ्यो" लोकेभ्यः "रणं" रमणं "धाः" धारयसि विदधासीत्यर्थः॥ ४ ॥ ९४

४ ५  १ १  २ १  २
I मेडीम् । नत्वावज्रिणम्भृष्टिमा२३न्ताम् । पुरु-
१र  २ १  २  १र  ३
धस्मानंवृषभꣳस्थिरा२३प्स्नुम् । करोष्यर्यस्तरुषाइर्दुवार३-
२  १  २ १  १  ३  ५र र
स्यूः । आइन्द्रद्युत्नम् । वृत्रार३ । हा२णा२३४औहो-
२  १ १ १ १ १
वा । गृणीर्षे२३४५ ॥ २८ ॥

४र ५  ४  २  ५  १  २ १
II मेडिन्नत्वा । वा३४औहो । जाइ । णम्भार्ष्टीइ-
२  ५  ३ २  २ ५  २ १र
मौ । वा३२३४ । ताम् । पुरा३४औहो । धस्मानं
२ १  र  ५  १ २
वृ । षभꣳस्थाइरौ । वा३२३४ । प्स्नूम् । करा३४-
५  २ १  २  ५
औहो । षिअर्यस्त । रुषाइर्दूवौ । वा३२३४ । स्यूः ।
१ २  ५  २ १  १  ३
इन्द्रा३४औहो । द्युत्नम् । वृत्रार३ । हा२णा२३४
५र र  २ र ३ १ १ १ १
औहोवा । गृणीषे२३४५ ॥ २९ ॥ ९५ . .

---

I,II भृष्टिमतः सूर्यवर्चसः सामनी द्वे ।

हे "इन्द्र!" "दुवस्युः" दुवः परिचरणं स्तुत्यादि-लक्षणं(१) तदिच्छुस्त्वं यतः "अर्यः" अरीन् अस्मद्विरोधिनः(२) "तरुषो:"(३) तारकान् जेतृनस्मान् करोषि (यद्वा। तरुषोः तरण-स्वभावात्। पक्ष द्वयेऽपि लिङ्ग-व्यत्ययः। अर्यः अरीनस्माकं शत्रून् करोषि उपक्षीणानिति शेषः) अतः "मेडिं न" (मेडिरिति-वाङ्नाम) [नै०१,११,१८] माध्यमिकीं वृष्टि-प्रदां वाचमिव तां यथावृष्ट्यर्थं स्तुवन्ति तद्वत्(४) "त्वा" त्वां "गृणीषे" स्तोत्र मुच्चारयामि स्तौमि(५) कोदृशं त्वां? "वृत्रहणं" वृत्रस्यासुरस्य मेघस्य वा हन्तारं। "द्युक्षं"(६) द्युलोके वर्त्तमानम्। "पुरुधस्मानं" वहूना मुदकानां धारकं(७) (यद्वा। वर्ण-व्यत्ययः(८))। पुरूणां वहूनां दासयितारं शत्रूणां क्षपयितारं) "वृषभं" कामानां वर्षकम्(९)। "स्थिरप्स्नं" स्थिररूपं। न ह्रीन्द्रस्य रूपं कदाचिदपि प्रच्युतं भवति (यद्वा। स्थिराणां शत्रूणां भक्षकं विघातिन

(१)—'दुवस्यति'-इति परिचरण-कर्मसु पञ्चमं नैघण्टुकम् ३,५।

(२)—'अर्यः'-इति ईश्वर-नामसु द्वितीयं नैघण्टुकम् २.२२। अतएव 'अर्यः ईश्वरः'-इति वि०।

(३)- 'तरुषमिति वधकर्म वधेन सङ्ग्रामो लक्ष्यते, सङ्ग्राममित्यर्थः'-इति वि०।

(४) 'अन्तर्णीतः-त्वदर्थश्च द्रष्टव्यम्, वाग्मिन मित्यर्थः'-इति वि०।

(५) —'गृणीषे मध्यमपुरुषैकवचनमिदम् उत्तमपुरुषैकवचनैकस्य स्थाने द्रष्टव्यम्' इति वि०।

(६)—दिवि द्युलोके क्षियति निवसति इति द्युक्षः, तम्।

(७)—'पुरुइति धननाम, धस्मान मिति धमेर्दमनं इत्यस्येदं रूपम्'-इति वि०।

(८) दस्मानमित्येवं दकारवर्णे पठितव्ये धस्मानमिति धकारवर्णपाठो वर्णव्यत्ययः

(९)—'वर्षणाद् वृषभः'-इत्यादि नैरुक्तम् दै०३,१३।

अथ षष्ठी।

वसिष्ठऋषिः।

१ २ ३ १ २ ३ १ २   ३ १ २ ३ १ २ ३ १ २
प्रवोमहेमहेवृधे*भरध्वप्रचेतसेप्रसुमतिंकृणुध्वं।

१ २ ३ १ २ ३ २   ३ २
विशःपूर्वीःप्रचरचर्षणिप्राः॥ ६ ॥ ९६

५ ४  १ २ ३ २   १ २ १   १
1 प्रवाः। माहेमहेवृधे। भराधूइवाम्। प्रचाइ-

२ १  २ ३  ५  १  ३
तसाइ। प्रासूमार३४तोभ्। कृणुध्वम्। इहा२वा२३-

मित्यर्थः।)' "वज्रिणं" वज्रवन्तम् "भृष्टिमन्त" शत्रूणां भर्जन-

वन्त(९) ॥ ५ ॥ ९५

---

* "मह्विवृधे"-इति, "चरा चर्षणि प्राः"-इति च ऋग्वे
दीय पाठः।

---

९६ उत्तरार्चिकस्य ८,१,११,१ = ऋग्वेदस्य ५,३,१६,४
आरण्यके ४,२,१३।

(९)—'भृष्टिशब्देन शिखराण्युच्यन्ते, तानि चात्र बहुशिखराणि परिगृह्यन्ते, तेद्व-
न्तम्' इति वि०।

४इ्शाः। पू२३वीः। प्रचा। रा२३चा। षणाइ। प्रा। औ३होवा। हो५इ। डा॥ ३०॥

II हु२३४५। प्रवामहाइमा२३४हे। वृधा३४३इ। भरा२३४ध्वाम्। हु२३४५। प्रचेतसाइप्रा२३४ह्र। मता३४३इम्। कृणू२३४ध्वाम्। हु२३४५। विशःपूर्वीइःप्रा२३४चा। रचा३४३। षणा२३४इप्राः। हु२३४५। हाउहोहोवाइ। हाउवा। ई२२४५॥ ३१॥ ९६

हे अस्मदीयाः पुरुषाः! "वो" यूयं "महेवृधे" महतां धनानां वर्द्धयित्रे "महे" महत इन्द्राय "प्रभरध्व" सोमान् प्रणयत। "प्रचेतसे" प्रकृष्ट-ज्ञानाय इन्द्राय "सुमतिं" सुष्टुतिं च(१) "प्रकृणुध्वं" प्रकुरुत।

---

I,II अङ्कर्षे हे।

(१)—'मन्यते इत्यर्चति कर्मणः (नै०३,१४,३८) सुशब्दः स्तुत्यर्थः ; शोभनां स्तुतिमित्यर्थः' इति वि०।

अथ सप्तमी ।

विश्वामित्रऋषिः ।

२ १ २ २ १ २ २ १ २ २ २उ ३ १ २ ३ १ २
शुनꣳहुवेममघवानमिन्द्रमस्मिन्नरेनृतमंवाजसातौ ।
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ २ २ ३ १ २
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसञ्जितंधनानि*॥७॥ ९७

५ ४ ५ र ४ ५ र ४ २ १ र
I शुनꣳहुवेममघवानमिन्द्राम् । अस्मिन्भरेनृत-
र २ १ २ १ र र २ १ २
मंवाचसा२३ताउ । शृण्वन्तमुग्रमूतयेसमा२३त्सू ।

अथ प्रत्यक्ष-स्तुतिः(२) । हे इन्द्र ! "चर्षणिप्राः"(१) कामैः प्रजानां पूरयिता त्वं "पूर्वीः" हविषां पूरयित्रीः "विशः" प्रजाः "प्रचर" अभिगच्छ ॥ ६ ॥ ९६

---

* "धनानाम्"-इति ऋग्वेदीयः पाठः ।

---

९७ ऋग्वेदस्य ३,२,४.६ ।

I भारद्वाजम् ।

(२) प्रचरेति मध्यमपुरुषयोगात् ।

(१) चर्षणयो मनुष्याः नि० २.३.८.

१ २ १ २ २ १ २
घ्न। तंवा२३र्त्रो३। ह्वोवा३हा। णिसञ्जितम्।

१ ० १ २ २ १
धना२३नी३। ह्वोवा३हा३४३इ। ओ२३४५इ। डा॥

॥ ३२ ॥ ९७

हे "इन्द्र!" "वाजसातौ" वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः तस्मिन् "भरे" (बिभ्रति जय-लक्ष्मी मनेन योद्धार इति भरः संग्रामः तस्मिन्) सङ्ग्रामे "शून" शूनम् उत्साहेन प्रवृद्धं(१) "मघवान" धनवन्तम् अतएव "इन्द्र" निरतिशयैश्वर्य्यसम्पन्न "नृतमं" सर्वस्य जगतोऽतिशयेन नेतारं त्वां "हुवेम" कुशिकावयं यज्ञार्थ मावह्येमा। तथा "शृण्वन्तम्" अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम्। "उग्र" शत्रूणामुद्गूर्णं। "समत्सु" सङ्ग्रामेषु(२) "वृत्राणि" वृत्रोपलक्षितानि सर्वाणि रक्षांसि "घ्नन्त" हिंसन्तं। "धनानि" शत्रु-सम्बन्धीनि सञ्जितं सम्यग्जेतारं त्वाम् "ऊतये" रक्षणाय वय मावह्येम॥ ७॥ ९७

---

(१)—'शून सुखं (नै० ३,६,११), सुखकरमिन्द्र मिति वि०।

(२)—'समत्' इति सङ्ग्रामनामसु द्वाविंशमिदमं नैघण्टुकम् २.१७।

अथाष्टमी ।

वसिष्ठ ऋषिः ।

उदुब्रह्माण्यैरतश्रवस्येन्द्रसमर्यैमहयावसिष्ठ ।
आयोविश्वानिश्रवसा*ततानोपश्रोतामईवतोवचाꣳसि॥८॥९८

I दिवया। ओवा। औ३होइवा। उदुब्रह्मा। णी३ एर। तश्रवस्या। इन्द्रꣳसमा। यै३महृ। यावसिष्ठा। आयोविश्वा। नी३श्रव। सातताना। दिवया। ओवा। औ३होइवा। उपश्रोता। मईव। तो३४३। वा३चापुꣳसा६५६इ ॥ ३३ ॥ ९८

* "श्रवसा"-इति ऋग्वेदीयः पाठ।

९८ ऋग्वेदस्य ५,३,१,१ = आरण्यके ४,२,९-१०।

I वैश्वदेवम्।

अथ नवमी।

गौरिवीतिर्ऋषिः।

३ १र २र३ १र २र ३ १र २र३ १र २र

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात्।

"अवस्या" अन्नेच्छया(१) "ब्रह्माणि" स्तोत्राणि हवींषि च इन्द्रार्थम् "उदीरत" सर्वे ऋषय इति शेषः(उइतिपूरणः(२) हे वसिष्ठ! त्वमपि "समर्ये" यज्ञे(३) "इन्द्र" "महय" स्तोत्रेण हविषा च पूजय। अपिच "यइन्द्रो" "विश्वानि" भुवनानि "अवसा" अन्नेन कीर्त्या वा "आततान" सः "ईवतः"(४) उपगमनवतो "मे" मम "वचांसि" स्तुति-रूपाणि वाक्यानि "उपश्रोता" भवतु॥ ८॥ ९८

---

(१)--अवोऽन्नमिति नरुक्तम्। 'अवस्या अवणीयाणि उतकृष्टानीत्यर्थः'-इति वि०।

(२)—'अथ ये प्रवृत्तेऽर्थे मिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' इति नै०१,९।

(३)—'समर्ये सङ्ग्रामस्थानीये यज्ञे'-इति वि०। 'समये' इति सङ्ग्रामनामसु चयोविंशतितमं नैघण्टुकम् २.१७।

(४)—'ईवतः ईन्वतेर्व्याप्ति कर्मणः, एतद्रूपं व्याप्तिमतः, अशेष-गुणप्रकाशनस्येत्यर्थः। कस्य पुनर्व्याप्तिमतः उपश्रोता? उच्यते—वचांसि, प्रथमाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्, वचसः वचनस्येत्यर्थः। यो विश्वानीति पुरस्तादुच्छन्दसमध्याहृत्यैक-वाक्यता योजयितव्या'-इति वि०। 'ईन्वति' 'इन्वति' च पाठभेदेन व्याप्तिकर्मसु प्रथमं नैघण्टुकम् २.१८।

३ १र २र ३२र ३ २ ३१र २र३ १ २
पृथिव्यामतिषितंयदूधःपयोगोष्वदधाओषधीषु॥ ८॥९९

॥ चतुर्थ-दशति ॥

५ ४ ५ र ४ र ५ ४ २ १र र २
चक्रंयदस्याप्स्वानिषत्ताम्। उतोतदस्मैमध्विच्च-

१ २ १र २ १ २ १ र
क्छा२३द्यात्। पृथिव्यामतिषितंयदू२३धः। पयोगो२३-

"अस्य" इन्द्रस्य "चक्रम्" आयुधं(१) अप्सु" अन्तरिक्षे "आ" सर्वतो "निषत्त" निषण्णामासीत् मेघ हननार्थम्। "उतो" तत् अपिच "अस्मै" इन्द्राय "मध्वित्" उदकमपि(२) "चच्छद्यात्"

---

९९ ऋग्वेदस्य ८,३,४,३।

I पुरीषम्।

(०)—"चक्रं चकते वा चरते वा क्रामते वा" इति नि० नै०४,२७।

(१)—'आप'-इति अन्तरीक्षनामसु अष्टमं नैघण्टुकम् १,३।

(२)—इच्छब्दोऽप्यर्थः। 'मधु' इति उदकनामसु एकादशं नैरुक्तम् १,१२। मध्वी-दिति ऋचि दीर्घस्त छान्दसः।

र १ र ऽ २ ऽ २ ३र २ ५र र
स्वादुर्मित्राया। ओ३हा। ओ३हा। पूष्णा३४औहोवा।
२ १११११
भगा३या२२४५॥ १२॥

III परी३होइ। प्रधा२३४न्वा। इन्द्रा२हो। य-
सो२३४मा। स्वादु३होइ। मित्रा२३४या। पूष्णो३होइ।
भगा२३४या। पूष्णोभगाय। पूष्णो३४३। हो३४३इ।
भा३गा५या६५६। ए३। सुवर्वते२३४५॥ १३॥

IV हा३हाइ। परिप्रा३धान्वा। ए२३४हिया। हा-
३हाइ। हा३हाइ। इन्द्रायाइसोमा। ए२३४हिया।
हा३हाइ। हा३हाइ। स्वादुर्मी३त्राया। ए२३४हिया।

---

III स्वर्निधनं सौहविषम्।
IV सौहविषम्।

२ २   २ २   २ र   १ १   ३
हाउहाइ। हाउहाइ। पूष्णेभाउगाया। एर्२३४-

५   २ १   १
हिया। हाउहा३४३इ। ओर्२३४५इ। डा॥१४॥

४   ५   २ १   १ १   र
V प। यैंपारो। प्रधन्वा। होवाउहोइ। इन्द्रा-

र   २ १   १र १ र   १ १
यसोमा। होवाउहोइ। स्वादुर्मित्राया। होवा३हो-

१   र १   ३   ५   ४
ये३। पूष्णौवाओर्३४वा। भगापूयाउ। वा॥१५॥१९५

हे "सोम!" "स्वादुः" स्वादुरसस्त्वं "इन्द्राय" "पूष्णे"(१) "भगाय"(२) एतेभ्यो देवेभ्यः "परिप्रधन्व" परितः पात्रेषु प्रचर॥ १ ॥ १९५

---

V वाङ्‌निधनंसौहविषम्।

(१)—"पूषा"-इति निघण्टावन्तरीक्षदेवतासु सूर्यात् परं गणितम् (५,६)। व्याख्यातश्चैवं यास्कः—"यद्रश्मिपोषं पुष्यति तत् पूषा भवति"-इति।

(२)—"भगमादित्यः"-इति नै०२,१९। "भगोव्याख्यातः (३,१६) तस्य कालः प्रागुत्-सर्पणात्'-इति च नै०१२, १२।

अथ द्वितीया ।

त्रिपदा अनुष्टुप्पिपीलिकमध्या(०) ।

३ १र २र ३ १ २　३ १ २ ३ १ १ २१ २
पर्यु षुप्रधन्ववाजसातयपरिवृत्राणिसक्षणिः ।

३ २ ३ १ २　३ १ २
द्विषस्तरध्याऋणयानईरसे ॥ २ ॥ १९६

२र　२ र　१　२　१　२
I पर्यूषुपृधन्वावाजा३सा । तायाइ । ओइ । पारी ।

१　२र　१　७　१
ओइ । वृत्राणि । सक्षणिः । द्वाइषस्तारा२ । धि-

१　१र　१
या२इ । ऋणाया२ः । ना२ः । ईरासा२३इ । ओ-

२　२　१
ये३ । रसा३४३इ । ओ२३४५इ । डा ॥ १६ ॥

५　२ १ र २　१ २ ३　५
II पर्यूषु । प्रधन्वावा३ । जासाता२३४याइ ।

२　र　१　२　१　१र　२　१
परिवृत्राणिसक्षणिः । द्विषास्ता३रा । धियाऋणया१ना-

२　१　२　५
३ई । ग्रम । रा३४४सो६वाइ ॥ १७ ॥

---

१९६ उत्तरार्चिकस्थ ६,१,७,१ = ऋग्वेदस्य ७,५,२२,१ = ऊहे ३,१,७ ।

(०)—"पिपीलिका—पेशतेर्गतिकर्मणः, पिपीलिकमध्येत्यौपमिकम्"-इति दैवत-ब्राह्मण-तृतीयखण्डे । एतदेव पाठभेदेन निरुक्तावपि, तथथा "पिपीलिकमध्ये-त्यौपमिकं, पिपीलिका—पेशतेर्गतिकर्मणः"-इति (दै० १,१३) ।

४ ५ १२ २ २ २ २ २

III प। येंपारौ। ऊषुप्रधन्वावाजसातयेपरिवृत्रा-

२ १ १ १२ २

णिसत्तणिर्वा२३इषाः। ता२३रा। धियाऋणयानश्रो-

२ १ ५ ४ ५

वा३श्रा२३४वा॥ रा५सो६हाइ॥ १८॥१९६॥

हे "सोम!" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि-प्रधन्व" परितः प्रगच्छ। [यद्वा। "वाजसातये" अन्नलाभाय(१) सङ्ग्रामं प्रगच्छ।] किञ्च। "सत्तणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् "परि" गच्छ। तदेवोच्यते—"नः" अस्माकं "ऋणया"(२) "ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै"(३) तरीतुं हन्तुम् "ईरसे"(४) परिगच्छसि।

"ईरसे"—"ईयसे"-इति पाठौ॥ २॥ १९६

---

I,II,III वाक्यानि त्रीणि।

(१)—'अन्नसम्भजनाय'-इति वि०।

(२)—'ऋणया'-इति तु "सुपां सुलुगित्यादिना (७.१.३९) सुपोऽयाचि साधितुं शक्य सुकरं यथा कौमुद्यां दर्शितं च समर्थयेति।

(३)—'तरध्यै'-इति "तुमर्थे से सेनसेन्"-इत्यादिना (३,४,९) सिद्धम्।

(४)—"ईरसे'-इति, निघण्टौ (२,१४) गति-कर्मसु पठितस्य "ईर्ते"-इत्यस्य लेटि (३,४,७) अडागमे (३,४,९४) रूपसिद्धम्।

अथ द्वमीषा ।

द्विपदा(*) ।

१२　३१ २३२ ३२ ३२ ३ २ ३ १र २र
पवस्वसोममद्यांत्समुद्रःपितादेवानांविश्वाभिधाम ॥३॥ १९७

४५ २र ४　१ २र १　२ १र ३ र १र
I पवस्वसोमा । माद्यांत्समुद्राः । पितादेवाना-

१ २ ५र र　२ १र १ १ १ १
२३म् । वा२इश्वा२३४औहोवा । भिधामा२३४५ ॥ १८ ॥

५र ५ २र ५ र १ २ ५र
II औहो३वा । औहो३वा । औहोरवा२३४औ

५ १ २र १र ११ २१र ३र १र ३र
होइवा । पवस्वसोम । मद्यांत्समुद्रः । पितादेवाना-

१ २र १ र ५र ५ २र २
२म् । विश्वाभिधामा२३४ । औहोइवा । औहोइवा ।

२ १ ३ ५र ५ २ १ १ १ १ १
औहोरवा२३४औहोइवा । ए३ । धर्मा२३४५ ॥२०॥ १९७

---

१९७ उत्तरार्चिकस्य ५,१,१७,१ = ऋग्वेदस्य ७,५,२०,
४ = ऊहे ५,१,९—२१,३,८ ।

I धाम साम । II धर्म साम ।

(*)—द्विपदा, पङ्क्तिरिति भेदः, विंशत्यक्षरद्वयमात् ।

अथ चतुर्थी।

१ २ २ ३ उ ३ २ ३ २ ३ २ ३ १ र २ र
पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ ४ ॥ १९८

५ र ५ २ र २ १ र ५ १ २ र
I औहोइवा। औहोइवा। औहोइवा। पवस्वसो-

१ र २ र १ २ र १ २ १ ५ र १ र ५ र २
म। महेदक्षाय। अश्वोननिक्तः। वाजीधनाऽया-

हे "सोम!" "महान्" देवेभ्यो दीयमानत्वेन महत्वयुक्तः। "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति रसास्तादृशः(१)। "पिता" सर्वेषां पालयिता(२) त्वं "देवानां" "विश्वा"(३) विश्वानि सर्वाणि "धाम"(४) धामानि शरीराण्यभिलक्ष्य "परि पवस्व" परिक्षर ॥ ३ ॥ १९७

---

१९८ उत्तरार्चिकस्य ५,२,१८,१ = ऋग्वेदस्य ७,५,२०, १० = ऊहे ६,१,४।

(१)—"समुद्रः—इत्येतत् पार्थिवेन समुद्रेण सन्दिह्यते। समुद्रः—कस्मात्? समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः, सम्मोदन्तेऽस्मिन् भूतानि, समुदको भवति, समुनत्तीति वा"-इति नि०२,१०।

(२)—"पिता—पाता वा पालयिता वा"-इति नि०४,२१।

(३)—छान्दसं रूपम् (७,१,३९)।

(४)—लुकि रूपम् (७,१;३९)।

५र १ १र १ र १ २ ५र
२३४। औहोइवा। औहोइवा। औहोरवा२३४उहोई-
५ १ १ २१ ११११
वा। ए३। विधर्मा२३४५॥ २१॥

४५ र ४ १र १ ११
II पवस्वसोमा। महेदा३क्षाया२। अश्वोननिक्तो-
र २ ५रर २ ११११
२३। वाजा४। औहोवा। धना३या२३४५॥ २२॥ १९८

हे "सोम!" "अश्वोन" अश्वः(१) इव "नक्तः" वसतीवरीभि-रद्भिर्विनिर्णिक्तः। "वाजी" वेगवान्(२) त्वं "महे" महते "दक्षाय" बलाय(३) "धनाय" धनार्थञ्च "पवस्व" क्षर।

'महे'—"क्रत्वे"-इति पाठो॥ ४॥ १९८

---

I, विधर्म साम। II धनसाम।

(१)—"अश्वः—कस्मात्? अश्नुतेऽध्वानं महाशनो भवतीति वा"-इत्यादि नि० २,२७।

(२)—'वेगवान् अन्नवान् वा'-इति वि०।

(३)—"दक्षः"-इति बलनामसु पठितं नैघण्टुकम् (२,९)।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ २ ३र
इन्दुःपविष्टचारुर्मदायापामुपस्थेकविर्भगाय॥ ५॥ १९९

४ ५ ४ १ १ २ १ १ २ १
I इन्दुःपविष्टा। चा२३रुः। मदाया। अपामुपा-

२ १ ३ ५ २ र १ १ १ १ १ १
२३स्थाइइ। का२वा२३४औहोवा। भगा३या२३४५।

॥२३॥ १९९

"चारुः" कल्याणरूपः "कविः" क्रान्तप्रज्ञः(१) "इन्दुः" सोमः। "अपाम्" उदकानाम् "उपस्थे" उपस्थाने अन्तरिक्षे पवित्रे वा "मदाय" मदार्थम्। "भगाय" भजनीयाय(२) धनार्थञ्च "पविष्ट" पवते(३)॥ ५॥ १९९

---

१९९ ऋग्वेदस्य ७,५,२१,३।

I आगम।

(१)—'कविः मेधावी'-इति वि०। "कविः"-इति निघण्टौ च मेधावि-नामसु दशमं पदम् (३,१५)। "मेधावी—कस्मात्? मेधया सहान् भवति"-इति, "मेधा? मती धीयते"-इति नैरुक्तम् (३,१९)। इत्थञ्चापि प्रतिपन्नं कविः क्रान्तप्रज्ञइति।

(२)—'भगोभजतेः'-इति नि०१,७। निघण्टौ धननामसु च दृश्यते भगइति (२,१०,१०)।

(३)—'पविष्ट जातः'-इति वि०।

अथ षष्ठी ।

त्रिपदा अनुष्टुप् । पिपीलिकमध्या ।

ऋषिदेवते पूर्ववत ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अनुहित्वासुतꣳसोममदाममसिमहेसमर्यराज्ये ।

१ २ ३ १ २ ३ १ २
वाजाꣳअभिपवमानप्रगाहसे ॥ ६ ॥ २००

४ ५ ४ १ २र १ २र १ २र २
I अनु । अनू । हाइत्वासुतꣳसोममदामसि । म-

र २ १ १ २ २ २ ५ १ १र २र १र
दामसायेर । महा३४३इ । सा३४मा । यंराज्ये । वा-

२र १ २र१ २र १ २र १ २ ४
जाꣳअभिपवमान । पवमाना । प्रागाहसा । औहो-

५ ४
वा । होप्इ । ४ डा ॥ २४ ॥ २००

हे "सोम !" "सुतम्" अभिषुतं "त्वा" त्वां वयम् "अनुमदा-
मसि(¹)हि" अनुमदामः अनुक्रमेणाभिष्टुमः खलु । हे "पव-

---

२०० उत्तरार्चिकस्य ६,१,७,२ = ऋग्वेदस्य ७,५,२२,२
ऊहे ६,१,१८—१८—८,२,८ = ऊह्ये २,१,७ ।

I वाजिनाꣳसाम ।

(१)—"इदमोमसि (७,१,४६)"-इति मस इकारागमे रूपम् ।

अथ सप्तमी।

वासिष्ठी। द्विपदा। मारुती।

२क २र ३ २ ३ १ २ ३ २ ३ २ ३ २ २ १ २
कई व्यक्ता नरः सनीडा* रुद्रस्य मर्या अथा† स्वश्वाः ॥ ७॥ २०१

४ ५र ४ ४ १ १ १
I कई व्या५क्ताः। नरःसा३नाइडा २ः। रुद्रस्यमर्या-

१ २ ५र र २ १ १ १ १ १
२३ः। आ२था२३४औहोवा। सुवा३श्वा२३४५ः ॥२५॥

मान" पूयमान साम! स त्वं "महे" महति "समर्थराज्ये"(१) महत् समनुष्ठं त्वदीयं राज्यमनुपालयितुं "वाजान्"(२) अन्नबलान्यभिलक्ष्य "प्रगाहसे" प्रगच्छसि ॥ ६ ॥ २००

* "सनीका"--इति, † "अधा"-इति च ऋग्वेदीय-पाठौ।

२०१ ऋग्वेदस्य ५,४,२३,१।

I हिकं साम।

(१)—'समर्थं राज्ये विप्रराज्ये यज्ञे'-इति वि०।

(२)—'वाजान् अन्नानि'-इति वि०। वाजस्त्वन्ननामसु (२,७,१) बलनामसु च पाठभेदेन (२,९,१) दृश्यते निघण्टौ।

II कई३४३वियक्ताः। नरा३४३ःसनीडाः। रुद्र-

स्यमर्या२३ः। आ२था२३४औहोवा। सुवा३श्वा२३४५ः

॥ २६ ॥

III काईम्। वियार३। औवा३। आक्ताः।

नाराः। सनार३। औवा३। आइडाः। रुद्रा। स्य

मार३। औवा३। आर्याः। आथा। सुवा२३। औवा३।

आश्वाः। होपूइ। डा ॥ २७ ॥ २०१

"व्यक्ताः" कान्तियुक्ता. "नरः" नेतारः "सनीडाः" समानाभ्यो-

नोकसः "रुद्रस्य" रोदनशीलस्य(१) एतन्नामकस्य "मर्याः" मर्त्य-

---

II विक्तं साम। III निक्तं साम।

(१)—"रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा। यदरुदत् तद्रुद्रस्य रुद्रत्वमिति काठकम्। यदरोदीत् तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्"-इत्यादि नि० १०,१,५।

अथाष्टमी ।

पदपङ्क्तिः(०) । आग्नेयी । वामदेव ऋषिः ।

३ २ ३ १ ३ २उ ३ २ ३ २३ १ ३ ३ १ २
अग्निं तमद्याश्वनस्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम् ।

३ १ २ ३ १ २
ऋध्यामा तओहैः ॥ ८ ॥ २०२

५ र ४ ५ २ १र २ १
I अग्निं तमाद्या । अश्वन्नस्तोमाइः । क्रतुन्नाइभा-

१ २ १ २ १ ३ ५र र
द्रारम् । हार्दिस्पृशाम् । ऋध्यार्मा२मा२३४ओहोवा ।

२१र २ १ १ १ १
स ओहा२३४५इः ॥ २८ ॥

नृभ्यो हिताः(२) । अथापि च "स्वश्वाः" शोभनवाहाः "इमम्" रुधम्रताः(३) "के" भवन्ति ? रूपातिशयात् ऋषिः(४) आश्चर्ये आहेति ॥ ७ ॥ २०१

---

२०२ उत्तरार्च्चिकस्य ८,१,५,१ = ऋग्वेदस्य ३,५,१०,१ यजुर्वेदस्य १५,४४—१७,७७ = ऊहे २१,२,७ ॥

(०)—गायत्रीपादसदृशाक्षरैरस्यास्त्रयः पादाः अयं मन्त्रः पदपङ्क्तौ गण्यते ।

(२)—"मर्था—इति मनुष्यनाम, मर्यादाभिधानं स्यात्"-इति नि०४,२ ।

(३)—"मिताक्षरेष्वमर्यकाः कर्मभिर्हितिः"-इति (१,८) निरुक्तवचनदर्शनम् इति अमर्यकम् विवरणमतम् ।

(४)—"ऋषिर्दर्शनात्"-इति नि० २,११ ।

५ र　२　१ २ ५　१　१र
II अग्ने। वो३४३इ। नमद्य। अश्वन्नस्तोमाइः।

२　१　१ २ १　२　१
क्रतुन्ना३भाद्रा२म्। हार्दा३ओइ। स्पृशम्। ऋध्यार२-

२　५र र　२१र २ १११
मा२३४औहोवा। तऔहा२३४५॥ २८॥ २०२

हे "अग्ने!" "अद्य" अस्मिन्नहनि, वयमृत्विगादयः "ओहैः"(१) इन्द्रादि-प्रापकैः "स्तोमैः" स्तोत्र-समूहैः(२) "तं" प्रसिद्धं त्वाम् "ऋध्याम"(३) समर्धयामः। कीदृशं त्वाम्? "अश्वं न" वाढारमश्वमिव तथा "हविषः" वाहकम्। "क्रतुं न" कर्त्तारमिव उपकारिणमित्यर्थः। तथा "भद्रं" भजनीयम्(४)। "हृदिस्पृशं" हृदयङ्गम्(५) अतिशयेन प्रियमित्यर्थः॥ ८॥ २०२

---

I,II आखिदे।

(१)—ओहैरिति श्रुतेः उह्यगानीयैरित्यर्थस्तु सुलभः, परं नास्य भाष्यकृतः सम्मतः, एतदर्थे ऊहगानस्य योनिगानमूलकत्वमानादित्वाभावात्।

(२)—षड्विध्यवमानादिभिरित्यर्थः।

(३)—निरुक्तौ परिचरण-कर्मसु पठितस्य ऋध्नोतीत्यस्य रूपम् (३,५,७)।

(४)—'भद्रं दीप्तम्'-इति वि०।

(५)—'हृदयं स्पृशति, हृदयेन वा स्पृश्यते'-इति वि०।

अथ नवमी।

पुरउष्णिक्। वाजिनां स्तुतिः।

२ १२३१र १३१२१र ३१२ ३२३२
आविर्मर्या आ वाजं वाजिनो अग्मन्देवस्य सवितुः सवम्।

३ १ २
स्वर्गं अर्वन्तो जयत॥ ९॥ २०३

२र १ ५ १र२ र र
I आविर्म्मा२३४र्य्याः। आवाजंवाजिनोअग्मान्।

२र१२ २र१ ५ १ ७
देवस्यस। वितुःसा२३४वाम्। स्वर्गां अर्वा२३४५न्ता-

१ ११११
३५६ः। जयता२३४५॥ ३०॥ २०३

"मर्य्याः" मनुष्येभ्यो हिताः "आविः" प्रकाशमानाः "वाजिनः" देव-विशेषाः(१) वाजिन-भाजः(२) "सवितुः" प्रेरकस्य देवस्य(३) "सवम्" अभिषोतव्यं "वाजम्" अन्नरूपं सोमं "ग्मन्" अगमन्। ततो हे यजमानाः! "स्वर्ग" "जयत" तथा "अर्वन्तः" अर्वतोऽश्वान् जयत॥ ९॥ २०३

---

I वाजिनां साम।

(१)—वाजिन इति निघण्टौ द्यु-दैवत-विभागे चिंशत्तमो देवगणः (५, ६,) "वेजनवान्" इति च तत्रैवोक्तम् (२, २८। १०, ३१)।

(२)—तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, आमिक्षा-निःसृतं च जलं वाजिनम्।

(३)—"सविता सर्वस्य प्रसविता"-इत्यादि च नै० १०, ३१-३१।

अथ दशमी ।

ऐश्वरयोधिंष्णया ऋषयः । द्विपदा ॥

१२　　२ १　२ ३ २ ३ १२　　३१२　१२३१२
पवस्वसोमद्युम्नीसुधारोमहाꣳअवीना*मनुपूर्व्यः ॥१०॥ २०४

॥ पञ्चम-दशति ॥†

४ ५　२ ४　　३ २　　२ ३१ ५　　१ २१　१ ३
I पवस्वसोमा । द्युम्ना३४२सुधारः । माहाꣳअवी

१ २१　　३ २
नाम् । अनुप । र्वियो२३४५इ । डा ॥ ११ ॥ २०४

हे "सोम!" "द्युम्नी" [द्युम्नं द्योततेः, यशो वान्नं वेति यास्कः (नि० नै०५,५)] अन्नवान् यशस्वी वा । "सुधारः" शोभन-धारा-युक्तः "पूर्व्यः" पुरातनः "महान्" त्वम् "अवीनां" "रोम्णां" रोमभ्यः सकाशात् "अनु" क्रमेण "पवस्व" चर ॥ १० ॥ २०४

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य नवमः खण्डः ॥ ९ ॥

---

* "महामवीना"-इति ऋग्वेदीयपाठः ।

---

२०४ ऋग्वेदस्य ७,५,२० ।

I पवित्रम् ।

---

† ॥ इति पञ्चमस्यार्द्धः प्रपाठकः ॥

अथ दशमे खण्डे—

सैषा प्रथमा।

ऐन्द्री।

१ २ २ १ १ २ ३ १ १ ३ २ ३ १ २ ३ १ १ २
विश्वतोदावन्विश्वतोनआभरयंत्वाशविष्ठमीमहे ॥ १ ॥ २०५

५ र १ २र १ २ २ २
I विश्वतोदाउ। दावन्विश्वतोना:। ओ३। हा।

२ ५ २र २ र १ २ १ २र १
ओ२३४हायि। आ। भरा। भा२३रा। यंत्वाशवि-

२१ १ १र ३र ५ २रर ३र २
ष्ठमायि। माहा। औहो२३४वा। ए हीयैही॥१ ॥ ३२॥

४ ५ र र ४ ५र ४ २ र १ २
II विश्वतोदावन्विश्वतोनआ। भरा। भा२३रा।

१ २र १ २ १ १ १ २ ४ ५
यंत्वाशविष्ठमायिम। हा। औ३होवा। हो५इ।

डा ॥ ३३ ॥ २०५

हे "विश्वतोदावन्" सर्वतश्छेदनवन्(१) सर्वत्र दानवन् वा(२) इन्द्र! स त्वं "विश्वतः" सर्वतः "नः" अस्मभ्यम् अभीष्टम् "आभर"

---

I,II आभरे हे।

(१)—दावन्निति 'दो अवखण्डने'-इत्यस्य रूपमिति बोद्धव्यं इति भावः।

(२)—दावन्निति ददातेरिति बोद्धव्यं इति भावः।

अथ द्वितीया।

ऐन्द्री।

३ १२ ३ २उ　 ३ १ ३ २ ३ १ १ ३ २ ३ २
एषब्रह्मायऋत्वियइन्द्रोनामश्रुतो गृणे ॥ २ ॥ २०६

४ ५　　१ र २　　२　　२ ३ १
I एषाः। ब्राह्मायआ३१उवा२३। ए३। त्वियआ।

१　 २　　 १ २　　　२　 २ ३ २
आ२३यिद्राः। नामश्रुता३१उवार३। ए३। गृणआ

॥ ३४ ॥

४५ ४५　　१　　१　　२ १　　२
II एषाएषाः। ब्राह्मा२ब्राह्मा२। यऋत्वियोवा।

१ २　　१　　१　　१र　　२ १ २
ओवा। आयिन्द्रा२आयिन्द्रा२ः। नामश्रुतोवा। ओवा।

२१　 २ ४ ५　४
गृणा। औ३होवा। हो५पुइ। डा ॥ ३५ ॥

आहर। किञ्च। "शविष्ठम्" अतिशयेन बलवन्तं "यं" त्वाम्" "हूमहे" अभीष्टं याचामहे(१) ॥ १ ॥ २०५

---

२०६ उत्तरार्चिकस्य ८,१,१,१ = ऊहे २१,१,८।

I,II वासुमन्दे ह।

(१)—"हूमहे"; इति पाचना-कर्मसु प्रथमं नैघण्टुकम् (३,१९)।

४५ ४ ४५ १२१ १ ७
III एषाः। ओ। ओवा। ब्रह्मायाः। क्षत्रिया२ः।

१ २ २ २ २ १ २ २१
आयिन्द्रो३हा३यि। ना३मा। श्रू२३ती। गृणा।

२ ४५ ७
औ३होवा। हो ऽ ५इ। डा॥ २६॥

४ २ २ ५ २१ १ २ २
IV ओ३हा३४३। ओ३४हा। एषाब्राह्मा३४३। या-

५ ४ ऽ २ २ ५ २१ २
३४ः। क्षत्रियाः। ओ३हा३४३। ओ३४हा। इन्द्रोनामा

२ ५८ ४ ऽ २ २
३४३श्रू३४। तोगृणायि। ओ३हा३४३। ओ३४५हा६५६।

२ १ २ २ १ १ १ १ १
ए३। सुवर्वते २३४५॥ २७॥

१८ १२ १२ १ १२ १२२
V एषब्रह्मौहो। याक्षत्रियाः। इन्द्रोनामौहो।

१२१२ २ २ २
श्रूतोगृणा३१उवा२३। ऊ३४पा॥ २८॥ * २०६

---

III,IV,V काव्यानि त्रीणि।

---

*॥ इति ग्रामे गेये एकादश-प्रपाठकः॥

अथ तृतीया।

त्रसदस्युऋषिः।

३ २ ३१२ ३१२ ३१र २र ३१२३१२ १२
ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवाउ ॥३॥ २०७

५ र २ १ १
I ओम्॥ हाउस्वरता। ब्रह्माणा२ः। इन्द्रम्। आ-

१ २ १ १ २ २ र २
महया२न्तो२३४र्कैः। अवा२र्द्धयान्। अहयेह। तवा२३-

५ १र १ १११
४५यि। ऊ६५६। श्लोकयता२३४५॥ १ ॥

५र ५ ११८
II हाउ। अभी। स्वरता। ब्रह्माणआयिन्द्रा२म्।

"ऋत्वियः" ऋतौ वसन्तादि-समये भवः "यः" इन्द्रः "नाम-श्रुतः" विश्रुतः "एषः" "ब्रह्मा" स्तोतॄणामभीष्टस्य वर्द्धयिता(१) तमहं "गृणे" स्तौमि ॥ २ ॥ २०६

---

· २०७ ऋग्वेदस्य ४,१,२८,४।

1,II श्लोके द्वे।

(१)—ब्रह्मेति इवि-ब्रह्मावितव्यवा कपमित्यभिप्रे स्तोतमेकम्।

अथ चतुर्थी ।

ऐन्द्री ।

१२ ३ १२३१२ ३ १२१२ ३१२

अनवस्तेरथमश्वायतक्षुस्त्व*ष्टावज्रम्पुरुहूतंद्युमन्तम् ॥४॥ २०८

२१ ३ ५ ११ १ २ १

महया२न्तो२३४ । कैः । अवर्द्धाया२न् । महयेहन्तवार-

४ ५

३४५ऊ६५६ । ह्मा२३४काः ॥ २ ॥ २०७

"महये" हन्ताय(१) [क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वात् हनन-क्रियायां हन्तस्य सम्प्रदानसंज्ञा] "हन्तहन्तवै" [तुमर्थे सेऽसेनिति (३,४,९) तवै(२) प्रत्ययः] हन्तुम् "अर्कैः" अर्चनीयैः स्तोत्रैः मन्त्रैः हविर्लक्षणैरन्नैर्वा "महयन्तः" पूजयन्तः(४) "ब्रह्मणः" ब्राह्मणाः "इन्द्रम्" अवर्द्धयन्" वर्द्धयन्ति प्रीतं कुर्व्वन्तीत्यर्थः ॥ ३ ॥ २०७

---

* "तक्षं त्व"-इति ऋग्वेदस्य ।

---

(१)—'महये—हननाय'-इति वि० । निघण्टौ मेघ नामसु अहिरिति एकविंशतितमं पदम्, हन्तरिति तु चत्वारिंशत्तमम् (१,१०) ।

(२)—अपि "तवै', 'उ'-इति छेदः ।

(३)—"अर्कोदेवोभवति यदेनमर्चन्ति । अर्को मन्त्रो भवति यदनेनार्चन्ति अर्कमन्नं भवत्यर्चति भूतानि । अर्को वृक्षोभवति स हतः कटुकिम्ना"-इति नि० ५, ४।

(४)—"महयति"-इत्यर्चति-कर्मसु पठितं अष्टमं नैघण्टुकम् (३ १४) ।

I हाउखरता। खरतखरा२३ता। आनवस्ते-
रथम्। अयायाता२१त्न्२३४ः। हाउखरता। खरतखरा
२३ता। त्वष्टावज्रं पुरुहू। ताद्यमान्ता२३४म्। हा-
उखरता। खरतख। रा२ता२३४अद्योवा। खरा३ता
२३४५॥ २ ॥ २०८

हे इन्द्र! "अनवः" मनुष्याः(१) "ऋभवः"(२) "ते" त्वत्सम्बन्धिने "अश्वाय" वाहनाय(३) तदर्थं "रथ"(४) "ततक्षुः" कृतवन्तः(५)

— — — — — —

I आनुष्टोकम्।

(१)—अनवः इति मनुष्य-नामसु पञ्चविंशतितमं नैघण्टुकम् (२,३)।

(२)—"ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन। तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन इति बहुतयीषु सूक्तानि भवन्ति। आदित्यरश्मयोऽप्यृभव उच्यन्ते"-इति नि० ११, १६।

(३)—"अश्वोवोढा (ऋ, ६म, ७अनु, ९सू, ४ऋक्)" इत्यादिश्रुतेरश्वस्य वाहनत्वम्।

(४)—"रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा। स्याद्विपरीतस्य रममाणोऽस्मिंस्तिष्ठतीति वा, रपते र्वा, रसते र्वा" इति नि० ९,११।

(५)—"तक्षतिर्वा स्यात् करोति-कर्मणः"-इति नि० ८; १३। मार्कण्डेय-लिखित्वम् (३,७,९)।

अथ पञ्चमी।

ऐन्द्री।

२ ३ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २ २
अस्मदं मघ॑रयीषिणेनकाममव्रतोहिनोतिनस्पृश-

३ २
द्रयिम् ॥ ५ ॥ २०९

३८ २ १ ४ ५ २ १ २
I औहोयि। आस्मदाम्। मघ॑रया॒ऽ१२३४यि।

४ १र र र २ २ ४
षिणायि। नकाममव्रतोहिनोतिनस्पृशत्। रयिमो२३४५

डा॥ ४ ॥ २०८

हे "पुरुहूत" बहुभिराहुतेन्द्र! "त्वष्टा" विश्वकर्मा च(१) त्वदीयं "वज्र" "द्युमन्त" दीप्तिमन्तमकरोत्॥ ४ ॥ २०८

---

I आनुस्तोकम्।

(१)—"विश्वकर्मा सर्वस्य कर्त्ता इति नि० १०,२५। तथाच ऋग्वेदीया श्रुतिः;—

"य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान्॥"
(१० म० १० अनु० ९सू० ९ऋक्)

अथ षष्ठी।

इयं वैश्वदेवी।

२ ३ २ ३ १ २ १ ३ १ २ ३ १ २ ३ १ २ ३ १ १
सदागावःशुचयोविश्वधायसःसदादेवाअरेपसः ॥६॥ २१०

४ ५ १र र २१र ५ ३
I सादा। गावःशुचयोविश्वधायार३साः। सार-

५ १ र २ १ ५ ३ ५
३४दा। दायिवाअरोर३४वा। पार३४साः ॥ ५ ॥ २१०

"रयीविणः" रयिं धनं हविर्लक्षणं प्रेषयन्तो जनाः "शं" सुखं "पदं"(१) स्थानं "मघं" धनं च लभन्ते इति शेषः। "अव्रतः" इन्द्र-विषय-यागादि-कर्म-रहितः(२) पुरुषः शं सुखादिकं "न हिनोति" न प्राप्नोति, दातुं समर्थो न भवतीत्यर्थः। स्वयमपि "कामम्" अभीष्टं "रयिं" रमणीयं धनं "न सृग्रत्"(३) न सृग्रति ॥ ५ ॥ २०९

"गावः" गन्तारः स्तोतारो वा(१) "सदा" इन्द्रं पर-रणादिभि-

---

I, वाचः साम।

(१)—'शं सुख, तस्य पदम्-शम्पदम्' इति वि०।

(२)—व्रतमिति कर्म्म-नामसु सप्तमं नैघण्टुकम् (२,१)।

(३)—सृग्रदिति लेटोरूपम्।

(१)—गच्छन्ति, 'गौर्ग्नाकारीनामकरणः'-इत्यादि द्विविध-नैघण्टि-इर्मनादित्यभि-

अथ सप्तमी।

सम्पातऋषिः।

द्विपात्। उषस्या।

१ २ ३१२ ३१ २र ३१र २र
आयाद्विवनसासद्दगावःसचन्तवर्त्तनिंयदूधभिः॥ ७॥ २११

३र २ ४ ५ १ १र
I औहोइयि। आयाद्दी। वना२सासद्दा।

१ १ १० १ १ ऽ २ २
गावःसच। तावर्त्तानी२म्। यात्। ऊर। धभिरो२३-

४५इ। डा॥ ६॥ २११

रुपगच्छन्ति ते "शुचयः" निर्मलाः "सदा" सर्वदा "विश्वधायसः" विश्वं धारयन्ति पुष्णन्तीति विश्वधायसः बहुलाः भवन्तीत्यर्थः। "सदा" सर्वदा "देवाः" दानादि-गुण-युक्ताः "अरेपसः" पाप-रहिताश्च(२) भवन्ति॥ ६॥ २१०

---

२११ ऋग्वेदस्य ८,८,३०,१।

I वाचः साम।

प्रायः २,५। अथवा गावः आदित्य-रश्मयः (नै० १, ५, १) अमेध्ये ऽपि पतमानाः शुद्धाः। अथवा गावः आपः, भूमि-गताः (नै० १,१,१,) अथवा गावः वाचः (नै०१,११,४)।—'ऋग्यजुः'सामलक्षणाः'-इति वि०।

(२)—'अरेपसः- अ-लेपिताः अ-पापाः; रेपइति पाप-नाम' इति वि०।

अथाष्टमी ।

१ २ ३ १र २र　३ २ ३ १ २　३ २ ३ १ १
उपप्रक्षेमधुमतिक्षियन्तःपुष्येम*रयिन्धीमहेतइन्द्र ॥८॥ २१२

४　४ ५ ४र ५　४ ५　४　१
I ओवा। उपप्रक्षेमधुमतिक्षियन्तः। ओवाओयि।

१ र　र र २ १　२　१　२　१
पुष्येमरयिन्धामहेतआ२३यिन्द्रा। ओ। वाओवा। ओ।

२र　२　५
वाहा३१उवा२३। ऊ३४पा ॥ ७ ॥ २१२

हे "उषः!" "वनसा" वननीयेन तेजसा "सह" सार्द्धम् "आयाहि" आगच्छ। उषसो वाहनभूताः "गावः"(१) "वर्त्तनीं" रथं "सचन्त" सेवन्त(२) अनश्वेन रथेनायाहीत्यर्थः। "यत्" याः गावः "ऊधभिः" उपलक्षिताः प्रभूताः पीना इत्यर्थः। ताः गावः इति सम्बन्धः ॥ ७ ॥ २११

---

* "पुष्यन्तो"-इति ऋग्वेदीयपाठः ।

---

२१२ उत्तरार्च्चिकस्य ४,१,२,४ ।

I माधुच्छन्दसम् ।

(१)—अत्र गाव इति रश्मय इत्यर्थः (मे० १,५,२) उषस उदयात् रेव चक्षुर्दीप्तत्वाद् वाहनत्वेनोपचर्यते ।

(२)—"षच सेचने सेवने च (भ्वा० आ०)" ।

अथ नवमी।

१ २ ३ २ ३ १ २ ३ १र १र ३ २उ ३ १ १र
अर्चन्त्यर्कं मरुतःस्वर्का आस्तोभति श्रुतोयुवासइन्द्रः॥९॥२१३

४ ५ ४ १ २ १ २ १ २र १
I अर्चन्तिया। कम्मरुतःसुवा२र्काः। आस्तोभता-

१ १र र ऽ ९ ९ ५
यि। श्रुतोयुवासआ। येन्द्रा३उवा३। ऊ३४पा॥ ८ ॥२१३

"हे इन्द्र" परमैश्वर्ययुक्त! (१) त्वं "मधुमति" माधुर्योपेते "प्रस्ते" राज-कर्त्तृक-न्यग्रोध-चमसे "ते" त्वदीये "चीयन्तः" समीपे स्थिताः वयं "रयिं" रमणीयमन्नं "पुष्येम" पोषयेम। किञ्च। त्वां "धीमहे" वयमनुध्यायेम॥ ८॥ ११२

"स्वर्काः" शोभन-स्तोत्राः(१) शोभनान्नावा(२) "मरुतः"(३)

---

२१३ उत्तरार्च्चिकस्य ४,१,२४=ऊहे ३,२,१९।

I मारुतम्।

(१)—"इन्दतेवैश्वर्य्यकर्म्मणः"-इत्यादि नि ४,८। "समस्ततेजः परमेश्वरत्व-निमित्तेन्द्र-शब्द-वाच्यः इति मीमांसा-भाष्ये शबरः।

(१)—"अर्को मन्त्रो भवति, यदनेनार्च्चन्ति" इति नि० नै० ५, ४।

(२)—"अर्कमन्नं भवति, अर्च्चति भूतानि" इति नि० नै० ५,४।

(३)—"अथातोमध्यस्थाना देवगणाः——तेषां मरुतः प्रथमागामिनो भवन्ति" इत्यादि नि०११,१३।

अथ दशमी ।

२ ३ १ २   ३ १ २   ३ १ २   ३ १ २   ३ २ ३ १
प्रवइन्द्रायवृत्रहन्तमायविप्रायगाथंगायतयंजुजो-

२
षते* ॥१०॥ २१४

॥ प्रथम-दशति ॥

५ ४   १   २   ७   २   १
I प्रवाः । आयिन्द्रायवृत्रहान्तमा२३या । वायि-

२ २   २   २ २   १   २   २   १
प्रायगाथंगाऽ१या४ता । याञ्जजौवा३ । उप् । षाऽ२तो४५-

२
हायि ॥ ८ ॥ २१४

"अर्कम्" अर्चनीय(४)मिन्द्रम् "अर्चन्ति" स्तोत्रैर्हविर्भिः । "युवा" नित्य-तरुणः "श्रुतः" विख्यातः "इन्द्रः" "आस्तोभति" तेषां सम्बन्धीनि शत्रुजातान्याभिमुख्येन हिनस्ति(५) ॥ ८ ॥ २१३

---

* "जुजोषत"-इति वि० पाठः ।

---

२१४ उत्तरार्च्चिकस्य ४,१,२५=ऊहे ३,२,२० ।

I उहांशं साम ।

(४)—"अर्कोदेवोभवति यदेनमर्चन्ति" इति नि० नै० ५,४ ।

(५)—विवरणकृता त्वेषान्यथैव व्याख्याता । तद्यथा—"अर्चन्ति । पूजयन्ति । 'अर्कं' देवम्, 'मरुतं' ऋत्विजः, 'स्वर्काः' शोभनमन्त्राः । 'आस्तोभति' स्तूयते ; 'श्रुतः' व्याख्यातः । 'युवा' तरुणः । कोऽसौ ? इन्द्रः"-इति ।

अथ चतुर्थखण्डे —

सैषा प्रथमा।

१ २ ३ १ २र ३ २उ ३ १ २
अचेत्यग्निश्चिकिति*र्हव्यवाड्नसु†मद्रथः ॥१॥२१५

हे "विप्राः" मेधाविनः! (१) "वृत्रहन्तमाय" अतिशयेन वृत्रस्य हन्तमः, तस्मै इन्द्राय "तं" "गाथं" स्तोत्रं(२) "प्रगायत" प्रकर्षेण पठत। हे उद्गातारः! स इन्द्रः "यं" स्तोत्रं "जुजोषते" सेवते। १० ॥ २१४

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य दशमः खण्डः ॥ १० ॥

---

* "श्चिकितु"-इति
† "हव्यवाट् स सु"-इति } इति ऋग्वेदीयपाठो।

---

२१५ ऋग्वेदस्य ६,४,२७,५!

(१)—"विप्रः" इति मेधावि-नामसु प्रथमं नैघण्टुकम् (३,१५)।
(२)—"गाथा" इति वाङ्नामसु चतुर्विंशं नैघण्टुकम् (१,११)।

४ ५र ४　　२ १　　१　　२　　१　　२
I अचेती। अग्निः। चिकार३यितीः३ः। हार३व्या

१　२　　५र र　　　२　२ १११ १
३। वा२डार२३४औहोवा। सुमद्रथार२३४५ः॥ १० ॥

४५र　४　　१　　　　　१र
II अचेतिया। ग्रायिश्वाइकायिती२३ः। हौ। होयि

२　११११　　１　　　१　२　५र र
औ३हो२३४५। हव्यार३। वा२डार२३४औहोवा।

२　२　२ ११११
ए३। सुमद्रथा२३४५ः॥ ११ ॥ २१५

"हव्यवाट्" हविषां वोढारं "चिकितिः" विशिष्ट-प्रज्ञः(१) "सुमद्रतः" सुष्ठु-हविर्युक्त-रथोऽग्निः "अचेति" चेत्यते सर्वैर्ज्ञायते। यद्वा। [व्यत्ययेन कर्त्तरि प्रत्ययः (३,१,८५)] हविःप्रदातारं यजमानं जानाति॥ १ ॥ २१५

---

I,II ग्राम्ये द्वे।

(१)—"चिकत्" इति पश्यति-कर्मसु प्रथमं नैघण्टुक, तस्य रूपं चिकितिरिति, अथवा प्रज्ञा-नामसु पठितं "केतः"-इति तस्यैवेति।

अथ द्वितीया ।

वन्धुर्ऋषिः । आग्नेयी ।

२३ २ ३ १ २ ३१ ३ १ २ १ २ ३ क २र
अग्ने त्वन्नो अन्तमउतत्राताशिवोभुवो*वरूथ्यः ॥२॥ २१६

४ १ २ १ २ ५
I ओग्नायि । त्वन्नो२३आ । ऊम्मा२३ । ता२३४माः ।

२ १ २र १र २ १र२ २ २र ४ ५ ४
उतत्राताशिवोभुवः । शिवोभुवा२३ः । वरोवा । थाऽ५

५
योऽ६हायि ॥ १२ ॥

४ र ५ ४र ५ २र १ २
II अग्नौ । होयि । त्वौहोयि । नोअन्तमा ३१ उवा

२ ५ १र २ ३ ५
२३ । ऊ२३४ ता । त्राता ओ २३४ वा ।

२ १र २ ३ १ १११
शिवोभुवा २३४५ ॥ १३ ॥

---

* "भवा"-इति ऋग्वेदीयपाठः ।

---

२१६ उत्तरार्चिकस्य ४,१,२२,१ = ऋग्वेदस्य ४,१,१९,१ = यजुर्वेदस्य ३,२५—१५,४८ = जहे ३,२,१८—१२,२,१५ ।

I गूढम् । II अत्यर्दः ।

५ र २　　४ ५र ४　५　　　२ १२र १र २१र २
III अग्नेतू३ वन्नोअन्तमाः।　उतत्राताशिवोभुवः।

१　　　　३र र २　　　　　५　　　४
वरा २ ३। औहोहो २ ३४ वा।　था ऽ ५ यो ६

५
हायि॥ १४॥

५ र　　२　　४ ५र ४　　४ ५　　　२
IV अग्ने। होपि। त्वन्नोअ। तमाः। ऊता २।

२　　　　ऽ　२　　　　१　　　　२ २
हा २यि। औ३हो३१यि। त्राता२। शिवा ३४५।

२　५
भू२३४वाः॥ १५॥ २१६

हे "अग्ने!" "वरूथ्यः" वरणीयः सम्भजनीयः। यद्वा। वरूथैः यज्ञगृहैर्हितः(१) "त्वं" "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव। "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव(२)॥ २॥ २१६

---

III गूहः।　　　　IV अल्पहः।

(१) वरूथमिति गृहनामसु सप्तदश पदम् नि० ३, ४।

(२)—"शिवम्"-इति सुख-नामसु द्वादशं नैघण्टुकम् (३,६,) ततो मत्वर्थो वाच्-प्रत्यये रूपमिति भावः।

अथ तृतीया।

आग्नेयीयमृक्।

२३ २ ३२ ३ २१२ ३ १ २३१२
भगोनचित्रोअग्निर्महोनान्दधातिरत्नम्॥ ३॥ २१७

४ ५ १ १ ३ १
I भागाः। नचित्रः। अग्निर्म्महोर२३नाउम्। दा२-
५र र २१२ ११११
धार३४औहोवा। तिरत्ना२३४५म्॥ १६॥

४ ५र४ ५ ४ २ १ २ १ ३
II भगोनचित्राः। अग्निर्माहार२३नाउम्। दा२धा-
५र र २ २१३११११
२३४औहोवा। ए३। तिरत्ना२३४५म्॥ १७॥ २१७

"महोनां" महताम् मध्ये "भगोन" सूर्य्यइव(१) "चित्रः" चायनीयः(२) पूजनीयः "अग्निः" यज्वनां "रत्न" रमणीयं धनं "दधाति" धारयति। प्रयच्छतीत्यर्थः(३)॥ ३॥ २१७

---

I,II सातनिके द्वे।

(१)—"भगमादित्यः"-इति नै० १,११। "न-शब्दस्तु उपमार्थीयउपरिष्टात्"-इति नै० १,४।

(२)—चित्रञ्चे वामामितिमन्त्रव्याख्यानावसरे एषएवार्थोऽयवहृतो यास्केन (१२,१६)। तदेवात्र व्याख्याने सातम्।

(३)—"ददि"-इत्यस्य निघण्टौ (३,११) याच्ञा-कर्मसु दर्शनमेवैतमर्थं सातम्।

अथ चतुर्थी।

एषा ऐन्द्री।

विश्वस्यप्रस्तोभपुरोवासन्यद्दिवेहनूनम्॥ ४॥ २१८

I विश्वस्या। प्रस्तोभा२। पुरोवासा३न्। यद्दिवे-
२३४हा। नू२३। ना२मा२३४औहोवा। धा२३४-
नाम्॥ १८॥

II औहोयि। विश्वस्या। प्रस्तोभा२। पुरौहोवा३-
हायि। वासा२न्। यद्दिवेहा। नू२३। नौ२मा२३४
औहोवा। धा२३४मौ॥ १८॥१२८

"विश्वस्य" सर्व्वस्य गत्‌जातस्य "प्रस्तोभ" प्रस्तोभति हिन-स्तीत्यर्थः। "यद्दिवा" "इह" यज्ञे "नूनं" "पुरा(१) वासन्" पूर्व्वस्मिन् देशे वसन् स्थितः स इह नूनं प्रस्तोभ ऋत्विग्भिः प्रकर्षेण स्तूयते [स्तोभतिस्तु स्तुति-कर्मा(२)॥ ४॥ २१८

I धनसाम।　　II धर्म्मसाम।

(१)—'नूनमिति वितर्क'-इति वि०।

(२)—स्तौति-कर्मस्विदं चतुर्थं नैघण्टुकम् (३,१४)।

अथ पञ्चमी।

सम्बर्त्तऋषिः। उषोदेवता। द्विपदा।

३ २उ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
उषाअपस्वसुष्टमः*संवर्त्तयतिवर्त्तनिंसुजातता ॥५॥ २१९

५ र १ २ ३ ५ ७ १ ७
I उषाअपा। स्वासुष्टा२३४माः। संवा२र्त्तया। तिवा

३ ५ १ ३ ५र र २ १ ३ १ १
२र्त्ता२३४नीम्। सू२जा२३४औहोवा। ए३। तता२३-
१ १
४५ ॥ २० ॥ २१९

इयम् "उषाः" "स्वसुः" भगिन्याः रात्रेः(१) सम्बन्धि "तमः" "अन्धकारम्" "अप संवर्त्तयति" आत्मीयेन तेजसा अपगमयति। "सुजातता" सुजातत्वं आत्मनः सुप्रकाशत्वं च "वर्त्तनिं" वर्त्तयति रथं प्रापयति(२) ॥ ५ ॥ २१९

---

* "स्वसुस्तमः"-इति ऋग्वेदीयपाठः।

---

२१९ ऋग्वेदस्य ८,८,३०,५।

I उषसः साम।

(१)—स्वसा स-असा, स्वेषु सीदतीति वा इति नि० ११।३२।

(२)—'स्वसुः तमः, स्वसुः स्वसा भगिनीव अपसंवर्त्तयति वर्त्तनिं रात्रिं वरणीयां अनस्य सुजातता इति विवरणकृद्व्याख्यानम।

अथ षष्ठी।

भौवनआत्यऋषिः।

३ २उ ३ १ २ ३ १ २ ' ३ १ २ ३ २
इमानुकम्भुवनासीषधे*मेन्द्रश्चविश्वे चदेवाः ॥ ६ ॥ २२०

५ ४र ५ ५ ४ २र १ २ २ २
I इमानुकम्भूऽ५वना। सीषधा२यिमाउवा३। ई३-
५ २ १ ३ २ २ ५ २ १ १
४द्दा। इन्द्रश्चवा२यिश्वाउवा३। ई३४द्दा। चदे२। वा
२ ५र र २ ५
२या२३४औहोवा। वी२३४श्वाः ॥ २१ ॥ २२०

"इमाः"(१) इमानि परिदृश्यमानानि "भुवना"(२) भुवनानि "नु" चिप्रं(३) "सीषधेम" साधयामः वशीकुर्नः। कमिति पूरकः(४) यद्वा। इमानि सर्व्वाणि भूतजातानि अस्मभ्यं "कं" सुखं(५) सीषधेम साधयतु (पुरुष-व्यत्ययः) "इन्द्रश्च" "विश्वे" सर्वे देवाश्च स्तुत्या प्रीता इममर्थं साधयन्तु ॥ ६ ॥ २२०

---

* "सीषधा"--इति ऋग्वेदस्य, सायणीयोत्तरभाष्य-धृतश्च।

---

२२० उत्तरस्य ४,१,२३,१ = ऋग्वेदस्य, ८,८,१५,१ आरण्यके ३,२१—२२ = ऊहे १,२०।

I भारद्वाजम्।

(१), (२)—सुपांसुलुगित्याल्वं रूपम् (७, १, ३९)।
(३)—"नु"-इति चिप्र-नामसु प्रथमं नैघण्टुकम् (२, १५)।
(४)—"मिताचरेष्वनर्थकाः कमीमिद्विति"-इति मं० १, ९।
(५)—"कम्"-इति सुख-नामसु अन्तिमं नैघण्टुकम् (३, ६)।

अथ सप्तमी।

कवषऐलूषऋषिः।

इयं वैश्वदेवी।

१ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
विस्रुतयोयथापथाद्यइन्द्रत्वन्तुरातयः ॥ ७ ॥ २२१

४ ५ ४ ५ १ १ २ र १
I विस्रूविस्रू। ताया२स्ताया२ः। यथापथाः।

१ १ २ १ ५ ४
आयिन्द्रा२ त्वाद्या २ ३। तुरा २ ३ ४ वाः। ता ऽ ५ यो-

५
६ हायि ॥ २२ ॥ २२१

हे "इन्द्र!" "त्वत्" त्वत्तः सकाशात् "रातयः" दानानि "वि यन्तु" विविधं गच्छन्तु। तत्र दृष्टान्तः—"पथः" राजमार्गात् क्षुद्रमार्गा यन्ति तद्वत्(१) ॥ ७ ॥ २२१

---

२२१ उत्तरार्च्चिकस्य ९,१,२,२ = ऊहे २१,८।

I रातिसाम।

(१)—"विस्रुतय," विविधाः स्रुतयः सरण्यः मार्गाः "इन्द्र!" "त्वत्" त्वत्समीपं "यन्त"; "रातयः" दानानि धनविशेषकानि 'अथवा'-इत्यादि वि०।

अथाष्टमी ।

भरद्वाजऋषिः । द्विपदा ।

२ १र ३ २र ३ १ २　　२
अयावाजन्देवहितꣳसनेम

१ २　३ १ २　३ १ २
मदेमशतहिमाःसुवीराः॥८॥ २२२

I अयावाजाम् । दायिवहि । तꣳसनेमा । मदे-
मशाइताहिमा २ः । शता२३ । हा शयिमा२३४औहोवा ।
सुवीइरा२३४५ः ॥२३ ॥२२२

"अया" अनया स्तुत्या "देवहितं" देवेन द्योतमानेनेन्द्रेण दत्तम्(१) "वाजम्" अन्नं "सनेम" वयं सम्भजेम । अपिच "सुवीराः" शोभन-पुत्रोपेता वयं "शतहिमाः" शतं हिमन्तान् "मदेम" हृष्याम ॥ ८ ॥ २२२

---

२२२ ऋग्वेदस्य ४,६,३,५ ।

I भारद्वाजम् ।

(१)—हितमिति "धोताक् त्यागे"-इत्यस्य रूपमिति मत्वैव व्याख्यातम् इत्यमिति ।

अथ नवमी।

आत्रेयऋषिः। इयं वैश्वदेवी।

२ २ ३ १२ २२ ३ २ ३
ऊर्जामित्रोवरुणःपिन्वतेडाः

१ २ ३ १ २ ३ १ २
पीवरीमिषङ्कृणुहीनइन्द्र॥ ९ ॥ २२३

४ ५ १ २ ११ १ १२ २
I ऊर्ज्जा। मित्रोवरुणःपिन्वता२३यिडाः। पीवरी-

२ ६ १ २ ५
मिषङ्कृणुहीनआयिन्द्रा२३उवा३। ऊ२३४पा॥ २४ ॥ २२३

हे "इन्द्र!" "मित्रः", "वरुणः", त्वञ्च सर्वे यूयं "ऊर्जा" रसेन बलेन वा(१) सहिताः "इडा" अन्नानि(२) "पिन्वत" अस्मभ्यं सिञ्चत प्रयच्छतेत्यर्थः। [पिन्व सेचने (भ्वा० प०) धातूनामनेकार्थत्वाद्दत्त प्रयच्छतेत्यर्थः] किञ्च। "पीवरी" प्रवृद्धम्(३) "इषम्" अन्नं (४) "नः" अस्माकं "कृणुहि(५)" कुरु देहीत्यर्थः(६) ॥९॥ २२३

---

I ऐषम्।

(१)—'ऊर्जा। अन्नं हविर्वा'-इति वि०।

(२)—"इरा, इळा, इडा वा"-इति पाठभेदेनान्न-नामसु द्वाविंशतमं नैघण्टु-कम् (२,७।)

(३)—पीवरीं -स्थूलाम्'-इति वि०।

(४)—इषमिति अन्न-नामसु चतुर्थं नैघण्टुकम् (२, ७)।

(५)—"वाच्छन्दसि (३, ४, ८८)"-इति हेरपित्व-वैकल्पिकम्।

(६)—"कृणुहि कुरु"-इत्येव वि०।

अथं दशमी ।

इयमेकपदाष्टाक्षरा गायत्री । वसिष्ठऋषिः ।

२ १ २
इन्द्रोविश्वस्यराजति ॥ १० ॥ २२४

॥ इति द्वितीय दशति ॥

१ २ १ ४ ५ ४ २ ३
I इन्द्रो३४ । विश्वस्यरा । जतिचो२३४५इ । डा ॥२५॥

१ १ १ १ २
II इन्द्रा २चोऽ१यि । वा २यिश्वा । स्यरा २जति ।

५ १
चोवार३चो२३४५इ । डा ॥ २६ ॥ २२४

यतः कारणात् "इन्द्रः" "विश्वस्य" भुवनस्य "राजति" ईश्वरो भवति, अतः कारणात् इन्द्रं प्राधान्येनाभिमुखीक्रियो-च्यते-इति पूर्वेणान्वयः(१) ॥१०॥ २२४

इति श्रीमायणाचार्य्यविरचिते सामवेदार्थप्रकाशे छन्दोआर्चिके चतुर्थस्याध्यायस्यैकादशः खण्डः ।

॥ इति ऐन्द्रं पदं समाप्तम् ॥

---

I,II वैराज द्वे ।

(१)-"इन्द्रः" परमेश्वरः "विश्वस्य" सर्वस्य "राजति" दीप्यते"-इत्येव वि० ।

त्रिकद्रुकेषु मुख्याः स्युर्द्वयर्च्चं चाष्टिरादिमा ।
जगत्ययंसहस्रेत्यथैन्द्रयाह्युपनस्तथा ॥
अग्निंहोतारमित्येषा अस्तुश्रौषडयारुचा ।
चतस्रोऽत्यष्टयोऽभित्यं तवत्यन्नर्यमित्यृचौ ॥
इमे द्वे अतिशक्कर्यौ विष्टौ इत्येकऊचिरे ।
प्रवोमहेऽतिजगती तमिन्द्रमिति तादृशी(क) ॥
सौरी ह्ययंसहस्रेति पावमानी त्वयारुचा ।
अस्तुश्रौषड्वैश्वदेवी मारुती तु प्रवोमहे ॥
अभित्यमिति सावित्री स्यादाग्नेय्यग्निमित्यसौ ।
ऐन्द्रोऽवशिष्टाइत्येवं छन्दोदैवतनिर्णयः(ख) ॥

---

(क)—'त्रिकद्रुकेषु'-इति मुख्या प्रथमा यासु, तासु ऋक्षु, अत्र—आदिमा ऋक् 'त्रिकद्रुकेषु'-इति अष्टिः अष्टिच्छन्दस्का। 'अयंसहस्र'-इति द्वितीया ऋक् तु जगती। अथ अनन्तरम्, 'एन्द्रयाह्युपनः'-इति तृतीया ऋक् तथा 'अग्निंहोतारम्'-इति एषा नवमी ऋक्, 'अस्तुश्रौषट्' इति पञ्चमी ऋक्, 'अयारुचा'-इति सप्तमी ऋक्,-इति चतस्रः ऋचः अत्यष्टयः अत्यष्टिच्छन्दस्काः। 'अभित्यम्'-इति अष्टमी, 'तवत्यं नर्यम्'-इति दशमी च ऋचाविमे द्वे अतिशक्कर्यौ अतिशक्करीच्छन्दस्के; एके आचार्यास्तु अष्टी अष्टिच्छन्दस्के एव इमे इत्यूचिरे। 'प्रवोमहे'-इति षष्ठी ऋक् अतिजगती अतिजगतीच्छन्दस्का; 'तमिन्द्रम्'-इति चतुर्थी ऋक् इयमपि तादृशी अतिजगत्येवेत्यर्थः।

(ख)—'अयंसहस्र'-इति द्वितीया ऋक्, सौरी सूर्य-देवताका। 'अयारुचा'-इति सप्तमी ऋक्, इयन्तु पावमानी पवमान-देवताका। "अस्तुश्रौषट्"-इति पञ्चमी ऋक्, वैश्वदेवी विश्वेदेवाः अस्याः देवताः। 'प्रवोमहे'-इति तु षष्ठी ऋक्, मारुती मरुतोऽस्याः देवताः। 'अभित्यम्'-इति अष्टमी ऋक्, सावित्री सवितृ-देवताका। 'अग्निम्'-इति नवमी ऋक्, असौ आग्नेयी अग्नि-देवताका। स्यादिति सर्व्वत्र सम्बध्यम् ॥

अथ द्वादशखण्डे—

तत्र प्रथमा ।

गृत्समद ऋषिः ।

१ २　　३ १२ ३२　　३ २
त्रिकद्रुकेषु महिषो यवाशिरन्तुविशुष्म*

३ १२　３२　३ १ २　२ १　३ १ २
स्तृम्पत्† सोमम पिबद्विष्णुना सुतं यथावशम‡ ।

१ २　३ २ ३ २ ३ १　२ ३ २ ३ १२
सईम्ममाद महिकर्मकर्त्तवे महामुरुꣳ

२र　３२ ३१२ ३२ ३१२ १
सैनꣳसश्चद्देवोदेवꣳसत्यइन्दः सत्यमिन्द्रम¶ ॥१॥२२५

१　२ ५　२　　१ १ २ १　१२२ १ ५
I ओयित्रिक । द्रुकायि । षूमहिषा । यवाशिरम् ।

३ २ ३ ५　२　२　५　१र　१ २
तुविशुष्मः । ओयितृम्पा२३४यात् । सोमाम । अपिवा३

* "तुविशुष्म"-इति ऋग्वेदीय-स्वर-पाठः ।

† "तृम्प"-इति ऋग्वेदीयः सायणीयोत्तरभाष्यधृतश्च ।

‡ "यथावशत्"-इति ऋग्वेदीय-त्र चिह्नित-पाठः ।

¶ "सत्यमिन्द्रं सत्यइन्दुः"-इति ऋग्वेदीयपाठः ।

२२५ उत्तरार्चिकस्य ६,१,१८,१ = ऋग्वेदस्य २,६,२८,१ = अग्ने २,२,१२—५,१,५—५,२,५ ।

I वाजजित् ।

१ १२र १५ ३१र३५ १ ३ ५
दि। ष्णुनासुतम्। यथावशम्। ओयिसा२३४ईम्।
१ १ १ १ १ १ १३ ५र ३१र३५ १ ३
ममा। दा३मद्दिक। मकत्तवे।, मद्दामुरुम्। ओयिसा
५ १ १र१र१र१ ५
२३४यिनाम्। सस्वात॰ देवोदेवाम्। सत्यइन्दुःसत्याऽ-
५
५मिन्द्राउ। वा॥२७॥२२५

"महिषः" महान्(१) पूज्यः "तुविशुष्मः" बहु-बलः(२) "तृम्पत्(३)" तृप्यन्निन्द्रः "त्रिकद्रुकेषु" ज्योतिर्गौरायुरित्येतन्नामकेषु अभिप्लविकेष्वहःसु(४) "सुतम्" अभिषुतं "यवाशिरं" यवमयैः सक्तुभिर्मिश्रितम्, [आङ्-पूर्व्वस्य श्रीञ् धातोः क्विपि "आसृधेर्यामित्यादिना(५) श्रियः शिरइत्यादेशः] तं सोमं "विष्णुना" सह(६) "अपिबत्"। "यथावशं(७)" पूर्व्वं यथा तं सोम मकामयत तथा अपिबत्[वश कान्तो (अ०, प०)। "बहुलं छन्दसीति (२,४,७३) शपोलुगभावः] "सः" पीतः सोमः "महाम्" महान्तम् "उरुम्"

---

(१)—"महिषः"-इति महन्नामसु अष्टमं नैघण्टुकम (३,३)।

(२)—तुवीति बहु-नामसु द्वितीयं नैघण्टुकम्(३,१,)। शुष्ममिति बल-नामसु एकादशतमं नैघण्टुकम् (२,९।

(३)—विकरण-व्यत्यये रूपम्। 'तृम्पत् तृप्तवान्'-इति वि०।

(४)—अहःस्विति पृष्ठास्थ-पञ्चमी टीप्पणी द्रष्टव्या (७८पृ० ५टी०)।

(५)—"आपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्त्तः (६,१,३६)"-इति पा०।

(६)—विवरणे तु "विष्णुना" अध्वर्युणा अभिषुतमित्यन्वयः।

(७)—'यथावशं यथोत्साहम्'-इति वि०।

अथ द्वितीया ।

गौराङ्गिरस ऋषिः ।

२१ १२३१ २ ३१ १२३ ३ २उ २ १२
अयꣳसहस्रमानवोदृशःकवीनाम्मतिर्ज्योतिर्विधर्म ।
२१ ३१ १२३ १२ ३१२ १२ ३
ब्रध्नःसमीचीरुषसःसमैरयदरेपसःसचेतसः
१२ ३१२ ३१
स्वसरेमन्युमन्तश्चितागोः ॥ २ ॥ २२६

विस्तीर्णम् "ईम्" एनम् "इन्द्रम्" "ममाद" अमादयत्(८)। किमर्थम्? "महि" महत् वृत्र-हननादि लक्षणम् "कर्म" "कर्त्तवे" कर्त्तुम्(९)। "सत्यः" "इन्दुः"(१०) स्रवन्। "देवः" दीप्यमानः "सः" सोमः "सत्य" यथार्थभूतं "देव" सोमं कामयमानम् "एनम्" "इन्द्रं" "सश्चत्" [सश्चतिर्व्याप्ति-कर्मा(११)] व्याप्नोतु ॥ १ ॥ २२५

(८)—"छन्दसि लिट् (३,२,१०५)"-इति भूतसामान्ये लिटि ममादेति भावः ।

(९)—"तुमर्थे सेऽसेन् सेन् क्से (३,४,९)"-इत्यादिना सिद्धम् ।

(१०)—इन्दुः सोमः ।

(११)—'उषनाम दानवः ; सः इन्द्रः, एनं दानवं स्यत् । स्यतिः हिंसार्थः, दानवं हिंसितवान् ।—अथवा स्यतिः सेवार्थः सेवते'-इति वि० । निघण्टौ तु स्यतिर्गति-कर्मसु दृश्यते (२,१४) न तु व्याप्ति-कर्मसु परं गतिरेव व्याप्तिमेव पर्यवस्यतीत्यभिप्राये-णोक्तमित्यनुमीयते ।

I अयꣳसहोचायि। समानार२३४वाः। हथ्राःकवीनामतिर्ज्यो। तिर्विधार२३४र्म्मा। बध्नाःसमायि। चीहृषसः। समायिराऽ१यार२त्। घरा३। होवा३। पा। सःसचे। तसा३ः। स्वासरे। मन्युमार२३न्ताः। चिते। या२३४औहोवा। गोर२३४५ुः॥ २८॥

II अयꣳसहस्रमानाइवाः। हथ्राःकवीनाम्मतिर्ज्यो। तिर्विधार३र्मा। बध्नाःसमायिचीहृषसः। समायिराऽ१यार३त्। घो३वा। अरेपसःसचेतसः। स्वासरे। मन्युमार३न्ताः। ओ३वा। चिता३। गोरेरा२३४औहोवा। वा२३४५॥ २९॥ २२६

---

I,II गोराङ्गिरसस्य सामनी द्वे।

"सहस्रमानवः" सहस्र-सङ्ख्याका मनुष्याः(१) यस्य सः, सहस्र-सङ्ख्याकैर्मनुष्यैरिवावस्थितैरश्मिभिर्युक्तः "दृशः" सर्वेषां दर्शनीयः(२) "कवीनां" मेधाविनां सर्वेषां "मतिः" स्तुत्यः मननीयोवा "विधर्म्म" विधातृ "ज्योतिः" तेजः "अयं" "ब्रध्नः" सूर्य्यः(३) "समीचीः" शुद्धाः निर्म्मलाः(४) "अरेपसः" तमः-पाप-रहिताः। "सचेतसः" समान-चित्ताः इमाः "उषसः" "समैरयत्" सम्यक् प्रेरयति। ततः "स्वसरे" [दिवसनामैतत् (नि, नै०१,९)] दिवसे "मन्युमत्तः" मन्युः प्रकाश(५)स्तद्वन्तः तेजस्विनश्चन्द्रमः-"प्रभृतयः" गोः आदित्यस्य तेजसा "चिताः" अपचिताः भवन्तिति विगत-तेजस्का भवन्तीत्यर्थः। ["आदित्योऽपि गौरुच्यते (२,६)" -इति निरुक्तम्॥ २॥ २२६

---

(१)—"मानवः" इति मनुष्यनामसु ऊनविंशं मैघण्टुकम् (२,३)।

(२)—'दृशः द्रष्टा'-इति वि०।

(३)—'ब्रध्नः महान् ब्रह्म सविता'-इति वि०। "ब्रध्नः" इति निघण्टौ-अश्वनामसु (१,१४) महन्नामसु च (३,३) दृश्यते। 'ब्रध्नः' ब्रह्म, सविता वा महान् वा इत्यनेनोपरि-ष्टाद् (६,१,१,९) व्याख्यास्यते। 'ब्रध्नम् इन्द्रम्, आदित्यरूपिणावस्थितम्'-इति चोत्तरा-र्चिकेऽनेनैवाचार्य्येण व्याख्यातम् (६.२, १२,१)।

(४)—'सम्यक् जाता' इति वि०।

(५)—'कान्ति कर्म्मसु इहस्य (नि०२,६) "मन्यते"-इत्यस्य रूपं मन्युरित्यभिप्रायः, मन्युमन्तः दीप्तिमन्तः, अथवा क्रोधो मन्युः तद्वन्तः,-इति वि०।

अथ तृतीया।

परुच्छेपऋषिः।

१ २२ १ २ ३ २३ १र २र ३ १ २ ३ १ २ ३
एन्द्रयाह्युपनःपरावतोनायमच्छाविदथानीवसत्पति-

२ ३ १ २ ३ १ २
रस्ता*राजेवसत्पतिः।

३ १र ३ १ २ ३ २उ ३ २ ३ २ ३ १ ३ १ २ ३
हवामहेत्वाप्रयस्वन्तःसुतेष्वापुत्रासोनपितरंवाजसातये

१ २ ३ १ २
मꣳहिष्ठंवाजसातये॥ ३ ॥२२७

४र ५ र ४ ५ ४ १ २ ५ १ र
I एन्द्रयाह्युपना:। पारा२वा२३४ता:। नायमच्छा।

२ र १ २ ५ १ २ २ १ १
विदथानायि। वासत्या२३४तीः। अस्तारा३जे३। वास-

३ ५ ४ ५र २र ४ ५ ४ २ १ १ २
त्या२३४तीः। हवामहेत्वाप्रयस्वन्ताः। सुतायिषू३वा।

२ १र र २ १ १ २ ३ ५ १ २
पुत्रासोनापितरंवा। जामाता२३४यायि। मꣳहायिष्ठा-

२ १ ४ २ ५
३०वा३। जा२३सा३। ता३४५योᳬहायि॥ ३० ॥२२७

---

* "रस्तं"—इति ऋग्वेदीयः पाठः।

---

२२७ ऋग्वेदस्य २,१,१८,१।

I ।।३(।

हे "इन्द्र!" "परावतः" दूरदेशात् स्वर्ग-लक्षणात्(१) "नः" अस्मान् "उपायाहि" अस्मत्समीपं प्रत्यागच्छ। तत्र दृष्टान्तः— "नायम्" अयं न पुरोवर्त्ती अग्निः "अभिषुतः" सोमोवा [प्रस्तुतत्वान्निर्दिश्यते] सइव [यद्यपि पुरस्तादुपचारान्निषेधार्थीयो नकारः सर्व्वत्र, तथाप्यत्रौचित्येनोपमार्थीयो गृह्यते]। यद्वा। "परावतः न" दूरदेशादिव। [यद्यपि यज्ञे सर्व्वदा सन्निहितः, तथापि स्वर्गाख्याद् दूरदेशादिव। अस्मिन् पक्षे अयमिति विभक्ति-व्यत्ययः।] "अयम्" इमं देवयजनदेशं "अच्छ" अभि प्राप्नुम्(२) आयाहीति शेषः(३)। तत्र दृष्टान्तः—"सत्पतिं" सतां सर्व्वदा वर्त्तमानानामृत्विजाम्पालको यजमानइव ["पत्यावैश्वर्य्ये(६,२,१८)"-इति पूर्व्वपदप्रकृतिस्वरत्वम्] त्वमपि यज्ञ-गृहाण्यागच्छ। यद्वा। सतां नक्षत्राणाम्पतिः चन्द्रमाः, स यथा स्व-धाम स्थानमागच्छति तद्वत्। "अस्ता" [अस्तं सुपआकारः (७,१,३८) अतएव बह्वृचा अस्तं राजेत्यामनन्ति] अस्तं गृहं(५) "राजेव" राजा यथा आगच्छति तद्वत्। किञ्च। "प्रयस्वन्तः" हविर्लक्षणान्नवन्तः यजमाना वयं "त्वा" त्वां "सुतेषु" अभिषुतेषु सोमेषु "आहवामहे" आभिमुख्येनाह्वयामहे। आह्वाने दृष्टान्तः—

---

(१)—'परावतः'-इति दूर-नामसुप्रथमं नैघण्टुकम् (३,२६)।

(२)—"अच्छाभेराप्तुमिति शाकपूणिः" इति (नि०५,२८)।

(३)—'अच्छ आप्नुं' विद्याभि व्याप्नोति यज्ञ-कर्म्माणि'-इति वि०।

(४)—'सुपांसुलुगित्यनेति (नै०,७,३८) भावः।

(५)—'अस्तम्'-इति गृह नामसु दशमं नैघण्टुकम् (३,४)।

अथ चतुर्थी।

रेभाऋषिः।

१२ १२ २ १ २ ३ २
तमिन्द्रञ्जोहवीमिमघवानमुग्रꣳ
३ १२ २१ २ १ २ २ १ १ २ १ २
सत्राद्धानमप्रतिष्कुतꣳश्रवाꣳसि भूरि।
१ २ ३ १२ ३१२ १ १ ३ २
मꣳहिष्ठोगीर्भिराचयज्ञियाववर्त्तराये*
२ १ २३१२ २१
नोविश्वासुपथाकृणोतुवज्री॥ ४ ॥२२८

४ ५ २ ४५२४ १ ५ २
I तमिन्द्रञ्जोहवीमिमघवानाम्। ऊ२३४ग्राम्। स-

"पुत्रासः" पुत्राः "पितरं न" पालकं जनकमिव तं यथा "वाज सातये" सङ्ग्राम-प्राप्तये तज्जयाय हविःस्वीकरणाय वा(१) आह्वयामः॥ ३ ॥२२७

---

* "ववर्त्तद्राये"-इति ऋग्वेदीयः पाठः।

---

२२८ ऋग्वेदस्य ६,६,२८,३।

I अचर्यम्।

(१)—'वाजः'-इति अन्न-नामसु द्वितीयं नैघण्टुकम् (२,७)—'वाजे' इति सङ्ग्रामनामसु च द्वापञ्चाशत्तमं नैघण्टुकम (२,१७)। सातिश्च लाभः। तथाच अन्नस्य लाभाय, सङ्ग्रामस्य वा लाभायेति वा इत्यर्थः फलितः। 'वाजसातिः'—इति समुदितपदमपि सङ्ग्रामार्थो इश्यते निघण्टौ तथैव।

१र    १र    १    ५    १    २
त्वाह्वोयि। दधानमप्रतारयिष्कू२३४ताम्। अवा२३(९)सायि।

३    ५    १    र र    ७    २    ५    १र
भू२३४री। मं(९)ह्विष्ठोगीर्भिरा। चया२श्वा२३४याः। वा

१    २र१र    १र    र    ३    ५    ३ १
वार्त्ती२। रायेह्वोयि। नोविश्वासुपा२३४था। कृणो३।

१ ३    ५र र    ३    ५
तू२वा२३४औह्वोवा। ऊ२३४पा॥ २१ ॥२२८

"तम्" पूर्वोक्तगुणोपेतम् "इन्द्रं" "जोहवीमि" यष्टाहं पुनः पुनराह्वयामि [ह्वयतेरभ्यस्तस्य चेति सम्प्रसारणम्] कीदृशं? "मघवानं" मंहनीय-धनवन्तम्(१) "उग्रम्" उद्गूर्ण-बलं "सत्रा" सत्यं(२) यथार्थमेव "शवांसि" बलानि(३) "भूरि" भूरीणि "दधानम्" अतएव "अप्रतिष्कुतं" शत्रुभिरप्रतिरोधनीयम् आह्वयामि। किञ्च "मंहिष्ठः" पूज्यतमो दातृतमो वा "यज्ञियः" यज्ञार्हः इन्द्रः "गीर्भिः" अस्मदीयाभिः स्तुतिभिः "आ ववर्त्त" यज्ञेष्वाभिमुख्येन वर्त्तते [वर्त्ततेर्लिटि(४) रूपम्] ततो "वज्री" वज्रवान् इन्द्रः "राये" धनार्थं "विश्वा" सर्वाण्येव "सुपथा" सुमार्गाणि "कृणोतु" करोतु। धनं सर्वदिग्जमस्मान् प्राप्नोत्वित्यर्थः ॥४॥२२८

---

(१)—'मघमिति धन-नामधेयम्, मंहतेर्दानकर्मणः' इति नि० १,७।

(२)—'सत्रा'-इति सत्य-नामसु तृतीयं नैघण्टुकम् (३,१०)।

(३)—'शवांसि यशांसि बलानि'-इति वि०।

(४)—'छन्दसि लुङ् लङ् लिटः'-इति पा० ३,४,६।

अथ पञ्चमी ।

पुरुच्छेप ऋषिः ।

२ ३ १ २ ३ २ ३ १ ३ १ २ ३ १ र २र ३ १
अस्तुश्रौषट्पुरोअग्निंधियादधआनुत्यच्छर्धो॰दिव्यं

१ ३ १ २
वृणीमहइन्द्रवायूवृणीमहे ।

१ २ ३ २ ३ १ २ ३ १ २ ३१ ३ १ २
यद्धक्राणाविवस्वते†नाभासन्दायनव्यसे‡ ।

२ ३ २ ३१र ३र ३ १ २ ३ २उ ३ ३ ३ १ २
अधप्रनूनमुपयन्ति¶धीतयोदेवा२ अच्छा§यनधीतयः॥५॥२२९

५ र ३१र ३१र २र १ २
I अस्तुश्रौषाट् । पुरोअग्निंधियादधे । हा । औ३हो

५ १र २र ५ ० १ २
२३४वा । आनुत्यच्छर्धोदि । व्याम् । वृणा२३यि । मा-

---

* "तच्छर्धो"-इति,
† "विवस्वति"-इति,
‡ "सन्दायिनव्यसी"-इति,
¶ "प्रसूनुउपयन्तु"-इति च
(ऋग्वेदीयपाठाः ।)

§ "अच्छ"-इति जर्मन्मुद्रित-पाठः ।

---

२२९ ऋग्वेदस्य २,२,३,१ ।

I याज्ञतुरम् ।

५　१　२　२　१　२　४　१
२३४हे। इन्द्रावा३यू३। वृणी२मा२३४हायि। यज्ञश्चा-
र　१　२　१　२र१र　र　२　४　५
णाविवाऽ१स्वा३तायि। नाभासन्दायना३। व्यामायि।
१　र　१　र१　१　२
अधप्रनूनमुपया। तिधीतायार२३ः। हा। औ३होर२३४-
५　१　२　१　२　५
वा। दायिवा६ऽ१अच्छार३। हा। औ३होर२३४वा।
२१　५　४　५
नधो२३४वा। ताऽ५यो६हायि॥ ३२ ॥२२९

अहं "पुरः" पुरतः उत्तरवेद्याम् "अग्निम्" आहवनीयाख्यं(१) "धिया" प्रणयनादि कर्मणा(२) "दधे" धारितवानस्मि। "त्यत्" तत् "शर्धः" तादृशं बलं(३) बलवन्तं वाऽग्निम्। यद्वा।

---

(१)—अयमत्र विवेकः—ऋत्विक्शालातः पश्चिम-विभागीय-'प्राचीनवंश'-नाम-यज्ञीय-वेद्याः दक्षिणस्यां दिशि धनुराकारो योऽग्निकुण्डः तत्र स्थितोऽग्निर्दक्षिणाग्निरुच्यते, उत्तरस्यां कुण्डो न विद्यते; पश्चिमस्यां वृत्ताकारः कुण्डो भवति, तत्र योऽग्नि स गार्हपत्य इत्युच्यते; पूर्व्वस्यां चतुष्कोण कुण्डः, तत्र योऽग्निः स एव आहवनीय इत्युच्यते। अस्ति चापरा वेदी ऋत्विक्शालातः पूर्व्वस्यां दिशि उत्तरवेदी = परवेदी = द्वितीयवेदीत्यर्थः। तस्या एव मध्य-भूमिर्नाभिरित्युच्यते, तत्राध्वर्यु प्रतिप्रस्थात्रोः कार्य्य-कलापाः, न तु होतुर्होम-सम्बन्धोऽग्नि-सम्बन्धो वा। तदेवं 'पुरः' पश्चिमवेदीतः 'पुरस्तात्', 'उत्तरवेद्यां' अवस्थित-पर-कुण्डे चतुष्कोणात्मके अग्निम् आहवनीयाख्यमित्यर्थः।

(२)—'धीः' इति कर्म-नामसु एकविंशतितमं नैघण्टुकम् (२,१)। 'धिया बुद्ध्या' -इति वि०।

(३)—'शर्धः'-इति बल-नामसु सप्तमं नैघण्टुकम् (२,९)।

तच्छर्द्धः तादृशं मरुतां सङ्घरूपं बलं "दिव्यं" दिविभवं "नु" क्षिप्रम् "आ वृणीमहे" आभिमुख्येन सम्भजामहे किञ्च "इन्द्र-वायू" "वृणीमहे" "प्रार्थयामहे।" "यत्" [सुपोलुक् (७,१,३९)] यः "विवस्वते" विवो हवीरूपं धनं तद्वते(४)। "नव्यसे" नवतराय यजमानाय "नाभा" नाभौ भूम्यानाभिस्थाने देवयजने। यद्वा। वेदिरूपे(५)। अथवा नाभौ सर्वस्य फलस्य सम्बन्धके यज्ञे ["यज्ञ-मारुर्भुवनस्य नाभिः" इतिश्रुतेः] "सन्दाय" सम्यक् बध्वा मिथः संयुज्य "श्राणा"(६) धनादिकं कुर्वाणो भवतः। तौ वृणीमहे इति समन्वयः। यस्मादेवं तस्मात् "अस्तु" "श्रौषट्"(७) अस्याः; स्तुतेः श्रवणं भवतु। [श्रोता भवतु वा मरुतां गणोऽग्निर्वा; इन्द्रवायु-पक्षे प्रत्येकापेक्षयैकवचनम्] "अध" अनन्तरं "नः" "धीतयः" अस्मदीयानि कर्माणि स्तुत्यादि-रूपाणि(८) "प्रनूनम्" "उपयन्ति" प्रकर्षेण युष्मानुपेत्य गच्छन्ति। किञ्च, "देवानच्छान"

---

(४)—'विवस्वते विवासनवते'-इति नि०। विवस्वन्त इति निघण्टौ मनुष्य-नामसु च दृश्यते (२,३)।

(५)—उत्तरवेदी-नामक-वेद्याः मध्ये भू-भागे इत्यर्थः।

(६)—"श्राणाः कुर्वाणाः"-इति नि ४,१९।

(७)—'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम् येयजामहइति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरश्छन्दस्यः'-इति शि० कौ० वे० ४, ४, १४०।

(८)—"धीतयः"-इति निघण्टौ अङ्गुलि-नामसु दृश्यते (२,५)। "अङ्गुलयः कस्मात्? अग्रगामिन्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाग्रसारिण्यो भवन्तीति वाङ्कना भवन्तीति वाञ्चना भवन्तीति वापि वाभ्यञ्चनादेव स्युः"-इति नि० ३, ८।

अथ षष्ठी ।

एवयामरुदृषिः ।

१२ ३१ ३१२ ३ १ १ ३१२
प्रवोमहेमतयोयन्तुविष्णवेमरुत्वते

३ १ २११ २
गिरिजाएवयामरुत् ।

१र २र३ १र१र ३ १२३१२ ३ २ ३
प्रशर्द्धायप्रयज्यवे*सुखादयेतवसेभन्ददिष्टये-

१ १ ३१२
धुनिव्रतायशवसे ॥ ६ ॥ २३०

I प्रा२३४। वोमहेमतयोयन्तुविष्णवो। हायि। मरुत्वता३यि। गिरिजा३४ः। हाहोयि। एवाया२।

अग्न्यादि-देवान् आभिमुख्येन पात्रमिव "धीतयः" अस्मदीयानि कर्माणि "उपयन्ति" तेषां समीपं प्रापयन्ति ।

"आनुत्यत", "आनुतद्"-इति—"नव्यसे","नवसि" -इति, "प्रनूनं" "प्रसूनम्"-इति च क्रमेण साम्नाम्नाय पाठः ॥ ५ ॥ २२९

---

* "प्रयज्यवे"-इति ऋग्वेदीय-स्वर-पाठः ।

---

२३० ऋग्वेदस्य ४,४,१३,१ ।

I एवयामरुतः साम: ।

२ ५ १ ० १ ७ १ १ २
मा२३४हुत । प्राग्मह्रीया२ । प्रायज्जगावा२३यि । सुखादा

५ १ २र १ २र १ २ २ १
२३४यायि । तवसेभन्ददिष्टये । धुनायिव्रा३ता३ । या२-

२ र २र र २ ५
ग्रा२३४औहोवा । वा२३४से ॥ ३१ ॥२३०

"प्रयन्तु" प्रगच्छन्तु" "गिरिजा:" गिरौ वाचि(१) निष्पन्नाः "मतयः" स्तुतयः। "महे" महते "वः" तुभ्यं [वचन-व्यत्ययः (३,१,८५)] "विष्णवे" व्याप्तायाम्(२) इन्द्राय विष्णवे वा(३) "मरुत्वते" मरुद्भिस्सहते। कस्य स्तुतयः? इत्युच्यते—"एवया-मरुत्" एतन्नामकस्य ऋषेः [षष्ठ्यालुक् (७,१,३९) अथवाऽयमृषिः गिरिजाः स्तुतेर्जनयिता भवति]। किञ्च, "प्रयन्तु" स्तुतयः। कस्मै? "शर्धाय" बलाय मारुताय (इतरत्सर्वं बल-विशेषणम्) "प्रयज्यवे" प्रकर्षेण यष्टव्याय। "सुखादये" शोभनाभरणाय(४)

---

(१)—"गीः"-इति निघण्टौ वाङ्नामसु (१,११) दृश्यते; तस्य सप्तम्यां "गिरि"-इत्येव सम्यग्यम् न तु गिराविति, तदन्यपाठोलिपिकरप्रमादएव लक्ष्यते। विवरणकृता तु 'गिरिजा—हृदये जाता, यज्ञजाता वा'-इत्युक्तम्।

(२)—"यत् यद् विषितो भवति तद् विष्णुर्भवति। विष्णुर्विशते र्वा व्यश्नोते र्वा"-इत्यादि नि० १२,१८। विष्लृ व्याप्तावित्यस्येदं पदं विष्णुरिति, यत उच्यते—विष्णवे व्याप्तायेति।

(३)—विष्णु-नामकेन्द्राय-इति वेत्यर्थः; इन्द्रः विष्णुरिति पर्यायेति भावः। इह च मानं निघण्टौ विष्णुपुराणादौ च द्वादशादित्येषु उभयोरेव परिगणनम्।

(४)—'सुखादये सुखदाय सुखप्रदाय'-इति वि०।

अथ सप्तमी।

आनानतः पारुच्छेपिरृषिः।

२ २ ३ १र २र　१ २उ　३ १ २
अयारुचाहरिण्यापुनानोविश्वाद्वेषाꣳसि

२ १ १ २　२ ३ २ ३ १ २
तरतिसयुग्वभिः*सूरोनसयुग्वभिः।

१ २ ३ १ २　३ १ २ ३ १र २र
धारापृष्ठस्य†रोचतेपुनानोअरुषोहरिः।

२ ३ २ १ २ ३ १र २र　३ १ २ ३ १ २
विश्वायद्रूपापरियास्यृक्व‡भिःसप्तास्येभिरृक्वभिः॥८॥२३१

[खादिराभरण-विशेषः। "हस्तेषु खादिश्च कृतश्च सन्दधे"-इति, "अंसेषु च ऋषयः पत्सु खादय"-इति च श्रुतेः]। "तवसे" बलवते। "मन्दद्दिष्टये" स्तुतिरूपा(५) इष्टिर्यस्य तत् मन्दद्दिष्टिः, तस्मै। "धुनिव्रताय" मेघानां चालनं कर्म्म यस्य, तादृशाय(६) "शवसे" गमनवते॥६॥२३०

---

* "स्वयुग्वभिः"-इति,
† "सुतस्य"-इति,　　ऋग्वेदीय-पाठाः।
‡ "यात्यृक्व"-इति च,

---

२३१ उत्तरार्चिकस्य ७,३,१०,१ = ऋग्वेदस्य ७,५,२४,१ आरण्यके २,२०—६,२ = ऊहे १०,२,३ = ऊह्ये २,१२।

(५)—"मन्दते"-इत्यस्य निघण्टौ स्तुतिकर्मसु (३,१४) दर्शनादित्यभिप्रायः।
(६)—'कम्पितकर्मायम्'-इति वि०। "धुनि ● ● मेघम्"-इति वि० दे० ४,११

४ ५ १ १ २ २४ ५ १२ २
I आया। रुचा। हरि। एथापुनानाः। विश्वाद्वे

२ ४ २३ ५ १२१ २ १
षा२ऽसितरती२३सा३युम्वभिः। स्वरो२३ना३। सा२यू२३

५२ २ २ ५
४औहोवा। ग्वा२३४भोः॥ ३४॥

५ २ ३ १२ १ ४ ५२ २२ १ १२ २
II अयारुचाहरिण्या। पुनानः। विश्वाद्वा२३यिषा।

१ १२ २ २ १ १ २ ५
सायितर। सौहो। वा३हा३यि। सायू२म्वा२३४भोः।

१२१ २ २ २ ४
सूरो२३ना। सयू३म्वाऽ५भा६५६यिः॥ ३५॥

४ १२ ४ १२ ४ ५२ १ ४२ २ ५ २ ४ ५
III अयारुचाहरिण्या। पू३३४। नानोविश्वाद्वेषा।

१ २ १ ७ १ २ १
सायितरति। सायुम्वाभी२ः। स्वरोना३। सायू२-

३ ५ ४२ ५२ ४ १ १ २ १
म्वा२३४भीः। धारापृष्ठा। स्वारो२चतायि। पुना-

२ १२ २ ५ ४ ५२ ४ १ १ २
नोश्रा३। रूपोहा२३४रीः। विश्वायदू। पापरिया।

---

I,II,III विषमाणानि त्रीणि।

१ ७　　　　१ १ १ १ ४ १
साकमुक्षाभौ२ः। सप्तासीश्ये। भा२३यिरा३। का ३४५

५
भोई्वायि॥ २६॥ २३१

"पुनानः" पूयमानः सोमः "हरिण्या" हरितवर्णया "अया" अनया "रुचा" रोचमानया धारया "विश्वा" सर्वाणि "द्वेषांसि" द्वेष्टृणि रक्षांसि "तरति" विनाशयति। तत्र दृष्टान्तः— "सुरीन" यथा सूर्य्यः "सयुग्वभिः" सह युक्तैरश्मिभिः तमांसि हिनस्ति तद्वत् (सयुग्वभिरिति छिकारादरार्थो)। यद्वा। धारया युक्तः सोमो युक्तैस्तेजोभिः सह रक्षांसि तरति। तस्य "पृष्ठस्य" (पृष्ठ इति धारक उच्यते) जगतो धारकस्य सोमस्य पतन्ती धारा "रोचते" दीप्यते। "पुनानः" पूयमानः "हरिः" हरितवर्णः सोमः "अरुषः" आरोचमानो भवति(१)। "यद्" यः सोमः "सप्तास्येभिः" रसाहरणशीलास्यैः(२) "ऋक्वभिः"

(१)—"अरुषम्"-इति रूप-नामसु पञ्चदशं नैघण्टुकम् (३,७)। "अरुषः"-इति अश्व-नामसु च दृश्यते (नि० १,१४,१७)।

(२)—"सप्तैतानादित्यरश्मीनयमादित्योऽभिरति"-इत्यादि नि० ९,११। 'सप्त-च्छन्दांसि वाक्स्वभूतानि येषामृत्विजां ते सप्तास्याः तैः सप्तास्येभिः। अथवा सप्त वषट्-कारिणो होतारः सप्तास्यानि सप्त सोमसंस्थाः सप्तास्यानि ताभिः'-इति वि०।

अथाष्टमी।

नकुलऋषिः।

१ २उ ३ २ ३ १ २३क १र ३ १ २ ३
अभित्यन्देवꣳसवितारमोण्योःकविक्रतु

१ २ ३ १ २ ३ १ २ ३ ३२ ३ १
मर्चामिसत्यसवꣳरत्नधामभिप्रियम्मतिम्*।

३ २उ ३ २ ३ १र २र ३ १ २ ३
उर्द्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनि

१ २ ३ १ २ ३ १ २
हिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः॥ ८ ॥२३२

५ ४ २र५र ४ ५ ४र ५ ५र४र ५ १र
I अभित्यन्देवꣳसवितारम्। औहोहोवाहायि। ओणा

५ २ १ ५ २ १ २ ५
२३४योः। कविक्रा२३४तूम्। आर्चामौ२३४सा। त्वा-

स्तुतिमद्भिः, ऋक्भिस्तेजोभिः(३) "विश्वा" विश्वानि सर्वाणि "रूपाणि" "परियाति" परितोव्याप्नोति(४)।

"पृष्ठस्य"—"सुतस्य"-इति साम्न ऋचः पाठो॥ ७ ॥२३१

---

* "मतिंकविम्"-इति यजुःप्रातिशाख्य-पाठः।

---

२३२ यजुर्वेदस्य ४,२५=अथर्ववेदस्य ११,४,२।

I सवितुः साम।

(३)—'ऋक्भिः ऋक्मिभिः'-इति वि०। "ऋचा" इति क्वचित् नामसु च दृश्यते (नि० १,१४,५)।

(४)—यद्यपि याति: प्रकृतितोगत्यर्थः, परं परिसाहचर्य्यात् परितो गमनं कथयति सुतरामिह व्याप्त्यर्थः।

सावा२३४९रा। त्वधामा२३४मी। प्रियम्मा२३४तीम्।

औहोऔहोवा२३४हाउ। ऊर्ध्वाया२३४स्य। यामातीर-

३४भाः। अदिद्यू४तात्। सवीमा२३४नी। औहोऔहो

वा२३४५हाउ। हाइरण्या२३४या। णीरामीर३४मी।

तसुक्रा२३४तूः। औहोऔहोवा२३४५हाउ। वा। एत।

कृपास्वा२३४५ः॥ ३७॥ २३२

"सवितारं" प्रेरकं(१) "देवं" वाग्व्यापारेण "अभि अर्चामि"

(१)—"सविता सर्वस्य प्रसविता" इति नि० १०, ३१। "तस्य कालो यदा द्यौर-पहततमस्काकीर्णरश्मिर्भवति"-इति नि० दै० ६, ११।

"सविता यन्त्रैः पृथिवीमरम्णा

दस्कम्भने सविता द्यामदृंहत्।

अश्वमिवाधुक्षद्धुनिमन्तरिक्ष

मतूर्त्ते बद्धं सविता समुद्रम्॥"

-इति ऋग्वेदे दशमस्य मण्डलस्य ऋग्विंशे प्रथमा। यास्केन च तस्या व्याख्यानम्—"सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे, सविता द्याम् अदृंहत्-

सर्वतः पूजयामि। कीदृशं? "कविक्रतु" क्रान्त-प्रज्ञं(२) "सत्य-सवं" अवितथ-प्रेरणम्। "रत्नधां" रमणीयानां धनानां दातारम्(३)। "अभिप्रियं" सर्वतः प्रीति-युक्तम्। "मतिं" मननीयं स्तुत्यम् "यस्य" सवितुः "भा" दीप्तिः "ऊर्ध्वा" उन्नता सती "श्रोण्योः" द्यावापृथिव्योः(४)। "अदिद्युतत्" अतिशयेन दीप्यते। यस्य सवितुः "सवीमनि" प्रसवे सति(५) "अमतिः" सर्वेषां कान्तिः(६) अदिद्युतत् भृशं प्रकाशते। सः "सुक्रतुः" शोभनकर्मा "हिरण्यपाणिः" हिरण्य-हस्तः सविता देवः "कृपा(७)" कृपया "स्वः" स्वर्गं निमित्तभूते सति "अमिमीत" "इमं" सोमम् इयत्तया मितवान्। यद्वा। स्वः सर्वस्या कृपया सङ्कल्पेन निरमिमीत॥ ८॥२३२

---

मिथावृषद्भिमन्तरिक्षे मेघं बहमतूर्षे बहमतूर्ष इति वा त्वरमाणदति वा सविता समुदितारमिति। कमन्यं मध्यमादेवमवक्षत्। आदित्योऽपि सवितोच्यते"-इत्यादि।

(२)—"कविः क्रान्तदर्शनोभवति कवते र्वा"-इति नि० १२,१३। कविरिति निघण्टौ मेधाविनामसु च दशमं पदम् (३,१५) क्रतुरिति कर्मनाम (नै०२,१) प्रज्ञानाम च (नै०३,९)। अतएव 'मेधावि-कर्माणम्'-इति वि०।

(३)—"रत्नधातमं रमणीयानां धनानां दातृतमम्"-इति ऋग्वेदीय-प्रथमर्क् व्याख्याने यास्कः नै०१,१५।

(४)—"श्रोण्यौ"-इति द्यावापृथिवीनामसु पञ्चदशं नैघण्टुकम् ३,३०।

(५)—"सवीमनि प्रसवे"-इति नि०६,७।

(६)—"अमतिरमामयी मतिरात्ममयी"-इत्यादि नि० ६,१२। विवरणेऽप्येवमेव।

(७)—तृतीयाविभक्तेर्लुकि (७,१,३९) रूपमिदं कृपेति।

अथ नवमी ।

परुच्छेपऋषिः ।

३ १२  २२  ३ १ २ ३ १ २  ३१२
अग्निꣳहोतारंमन्येदास्वन्तंवसोः*सूनुꣳ

२२ ३ १२ ३२३१३ १०
सहसोजातवेदसंविप्रंनजातवेदसम् ।

३ १ २ ३२ ३ २३१ २ ३ २
यऊर्द्ध्वयास्वध्वरोदेवोदेवाच्याकृपा ।

३२३१२ ३१२३१२  ३ १ २  ३ १ २
घृतस्यविभ्राष्टिमनुशुक्रशोचिषआजुह्वानस्य†सर्पिषः॥९॥२३३

५ र  २ ३र १ २  २ १
I अग्निꣳहोता । रम्मन्येरदास्वन्तम् । औ३वा३ ।

१ २ १ ५ २ र ५ १ २  १
वासोःसूर२३४नूम् । सहसोजा३तावे५१दासा२म् । विप्र-

र १ १ २ ५ २ १ २
नजा । औ३वा । तवेरदार२३४साम् । यऊर्द्ध्वा५१या२ ।

२ १ २  २र र र  २ २  १ ३ ४
सुवाध्वा५१रा५रः । देवोदेवा । ऊ३वा३ । चिया२कापा ।

---

* "वसु"-इति, † "मनुवष्टिशोचिषाजुह्वानस्य"-इति च ऋग्वेदीय-पाठः ।

---

२३३ उत्तरार्चिकस्य ८,१,१८,१=ऋग्वेदस्य २,१,१२,१. =यजुर्वेदस्य १५,४७=अग्नौ ६,२,४ ।

५ ४ २ १ २र १ २ २ २
घृतोवा। स्यविभ्रा२ष्टिम्। अनुष्वक्रशा। औ३वाचियः।
१र २ ३ २ १ १ ३ ५र र
आजू२३ह्वाना। स्यसा। औ३वा३। पा२यिषा२३४औहो-
२ ५
वा। ऊ२३४पा॥ ३८॥

४ ३ र ४र ५ र १ ४ ५ ४ ५र र ४
II अग्निꣳहोतारम्मन्ये। दा२३४। स्वन्तंवसोःसूनुम्।
२ र ३र १ २ २ ३ र २
सहसोजा३तावे३१दासा२म्। विप्रन्नजा३तावे३१दासा२
१र ३र १ ७ २र र र ३र १ २
म्। यऊर्ध्वया३स्वध्वारा२ः। देवोदेवा३चाया३१क्रपा२।
२१ २ १ रर १ २ १ २ १र २
घृतास्यविभ्राष्टिमनुष्वु। क्रशो३१चिषा२ः। आजूह्वा३
२ १ ४ १ ५
ना३। स्वा२३सा३। पा३४५यिषोई३ हायि॥ ३८॥

२ २ १ ५ २ १ ३ २ ३ ४ ५
III अहावोहा२३४वाः। ३। अग्निष्टपती। प्रतिदहती।
२ १ २र ४ २र ३ ५ २ १ २र
अग्निꣳहो। तारम्मा३न्य३दास्वन्तम्। वसोः। सूनुꣳ
२ र ४ २र २ ५ २ १ ३ ४ २र २ ५
सह सो जा३ता३ वेदसम्। विप्राम्। नजा३ता३ वेदसम्।

---

I,II भारद्वाजे द्वे। III अवभृथं साम।

१ १ १ ४ ० १ ५ २र१ २र ४ २र १२र
य ऊर्ध्वयाउ्ह्वउवध्वरः। देवो। देवाउ्चीउ्या कृपा।
२१ २ र ४ २र १ ५ २र १ २र
घृता। स्वविभ्राष्टि मनुशूउ्क्राउ्शोचिषः। आजू। कानाउ्
४ २ ३ ५ ३ २ १ १ २ १
स्याउ्सर्पिषः। अचावोचा२३४ वाः। ३। अग्निष्टपती।
१ १ ५ ४ २ १ २ १ २
प्रतिदद्ध्वाऽ५ताइ५इयि। एउ्। विश्वॅसमत्रिणं दह। २।
२ १ २ १ १ ३ १११५
एउ्। विश्वॅसमत्रिणं दहा२३४५ ॥४०॥

IV त्वमग्नायिः। प्रतिदह्वती। हाउहो२५हाउ। अग्निॅ
२र ४ २र ३ ५ १ १ २र र
हो। तारम्याउ्न्येउ्दास्वन्तम्। वसोः। हनुॅसहसोजाउ्
४ २र १ १ १ १ ४ २र ३ ५ १ १ १
ताउ्वेदसम्। विप्राम्। नजाउ्ताउ्वेदसम्। यज्ञ। ध्वया
४ १ ४ ५ २र१ २र ४ २र १ ५ ११ १
उ्ह्वउवध्वरः। देवो। देवाउ्चीउ्याकृपा। घृता। स्ववि-
र ४ २र ४ ५ २र १ २र ४ १ १ ५
भ्राष्टिमनुशूउ्क्राउ्शोचिषः। आजू। कानाउ्स्याउ्सर्पिषः।
१ १ १ १ ४ १ ५ १
त्वमग्नायिः। प्रतिदह्वती। हाउहोऽ५हाउ। वा। एउ्।

---

IV प्रवर्ग्यं साम।

